The Collection of Hindu Law Texts.

Vol. XXIII.

THE

# PRÂYASCHITTA MAYÛKHA

*( Sanskrit Text. )*

A TREATISE ON

PENANCES

BY

BHAṬṬA NÎLAKAṆṬHA.

---

EDITED BY

J. R. GHARPURE, *B.A., LL.B., (Honours-in-Law)*;

Pleader, High Court.

*Principal Law College, Poona*

---

First Edition

---



---

1927

धर्मशास्त्रग्रन्थमाला ( ग्रन्थाङ्कः २३ )

॥ श्रीः ॥

भट्टनीलकण्ठकृतभगवन्तभास्करे

# प्रायश्चित्तमयूखः

## ( दशमः )

स च

जगन्नाथ रघुनाथ घारपुरे, बी. ए., एल्‌एल्‌. बी.,
हायकोर्ट वकील, मुंबई,

पुण्यपत्तनस्थव्यवहाराश्रमे मुख्याध्यापकः

इत्यनेन संशोधितं प्रकाशितश्च ।

प्रथमावृत्तिः

शकाब्दाः १८४८, क्रिस्ताब्दाः १९२७

# उपोद्घातः ।

धर्मशास्त्रग्रन्थमालाया अयं त्रयोविंशतितमो ग्रन्थोऽधुना प्रकाशं नीयते । भट्टनीलकण्ठावधृतभगवन्तभास्कराख्यधर्मशास्त्रप्रबन्धे द्वादश मयूखाः 'संस्काराचारकाला' इत्यादि श्लोके दर्शिताः । तेषां दशमोऽयं प्रायश्चित्तमयूखो नाम । तत्राद्यः संस्कारमयूखो नीलकण्ठभट्टपुत्र शंकरभट्टो रचितवान् । आचारादयकादशमयूखास्तु भट्टनीलकण्ठेन स्वयमेव रचिता इत्यत्र विशेषः ।

भाट्टवंशविस्तारस्तथा भट्टनीलकण्ठस्य कालदेशादिविचारोऽस्मद्विरचितव्यवहारमयूखस्याङ्गलभाषान्तरेऽस्यां एवमालायाश्चतुर्दशमे विस्तरतः सावकाशश्च कृतः । सैव संक्षेपतो नीतिव्यवहाराचारोत्सर्गप्रतिष्ठादिकेषु चिन्मयूखेषु दर्शितो भाट्टवंशवृक्षश्च तत्तत्तत्स्थलेष्वालोचनीय इति नात्र उद्घाटितः ।

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि सङ्ग्राश्च प्रकाश्यन्ते । तद्यथा

अ—डेक्कनकॉलेजसंग्रहात्प्राप्तं १८८१–८२।७८ इत्यनुक्रमाङ्केन चिह्नितम् ।

ब— ,, ,, १८८९–९२।२४८ ,, ,,

क— ,, ,, १८८१–८२।८८ ,, ,,

घ— ,, ,, १८८२–८३।१०४ ,, ,,

ध— ,, ,, १८९६–१९०२।१४२ ,, ,,

ङ—आनन्दाश्रमसंग्रहादानीतम् । २७०७ ,, ,,

न—सत्पुरवासिश्रीबालाचार्यगजेन्द्रगडकर इत्येतैः प्रेषितं ।

फ—फर्ग्युसनकॉलेजमण्डलीकविभागात्प्राप्तम् ।

य—श्रीमत्सरदारविंचूरकर इत्येतेषां संग्रहात्प्राप्तम् ।

र— ,, महेंदळे ,, ,,

ल—कलिकाता रॉयल एशिआटिकसोसाइटीतः प्राप्तम् ।

ख—राजापुरस्थपाठशालातः प्राप्तम् ।

ह्य—श्री वाराणस्यां शिलामुद्रितं ।

परमुपकृता नो येभ्य सकाशादेतानि प्राप्तानीति शम् ।

जगन्नाथ रघुनाथ घारपुरे.

# प्रायश्चित्तमयूखस्य विषयानुक्रमणिका ।



॥ इति श्रीमीमांसकशंकरभट्टात्मजभट्टनीलकण्ठकृते भगवंतभास्करे प्रायश्चित्तमयूखस्य विषयानुक्रमणिका समाप्ता । जगन्नाथसूनुना विश्वनाथेन कृतेयम् ॥

श्री ॥

## भट्टनीलकंठकृतभगवंतभास्करे

# ॥ अथ प्रायश्चित्तमयूखः प्रारभ्यते ॥

श्रीगणेशायनमः । नमामि भास्वत्पदपङ्कजं तन्मौलौ विधायाञ्जलिमादरेण ।
क्षीराब्धिजावासनिकेतन यद्विष्णोश्चरालम्रभवस्वरूपं ॥ १ ॥
जज्ञे पितामहतनो खलु कश्यपो यस्तस्मादजायत मुनिस्तु विभाण्डकाख्य ।
तं पुत्रिणां धुरमरोपयदस्य ऋश्यस्तस्याऽन्वयेऽप्यजनि शृंगिवराभिधान ॥ २ ॥
तस्मिन्वंशे महति वितते सेंगराख्ये नृपाणां राजा कर्णे समजनि यथा सागरे शीतरश्मि ॥
कीर्त्या यस्य प्रथिततरया श्रोत्रजातेऽभिपूर्णे कर्णस्यापि प्रविततकथा नावकाशं लभते ॥ ३ ॥
विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोऽप्यास राजाऽस्य सनुस्ततोभूद्दयाख्यो रणेष्वेव सर्वाहितघ्न ॥ ४ ॥
बभूवाथ वैराटराजस्ततोभून्नृपो मेदिनीवल्लभो वीरराज ॥
नरब्रह्मदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चन्द्रपालाभिधान ॥ ५ ॥
शिवगणाख्यनृप समजन्यथो शिवगणाख्यपुर प्रचकार य ॥
शिवगणेन सम मरुलेगुणे शिवशिवप्रथमो गणनासु य ॥ ६ ॥
रोलिचन्द्र इति तत्तनयोऽभूद्धर्मसेननृपतिस्तनयाऽस्तु ॥
लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजात ॥ ७ ॥
यशोदेवस्ततो जातस्ताराचन्द्रनृपस्तत । चक्रसेनस्ततो राजा राजर्षिर्हस्तपो यतः ॥ ८ ॥
ततोऽप्यद्भूपतिसाहिदेव स्वकीर्तिभिर्निर्जितदुग्धसिंधु ।
अभूत्तत श्रीभगवंतदेव सदैवभाग्योदयवान् क्षितीश ॥ ९ ॥
यद्दानद्रविणाद्रिनिर्जितवपू रत्नाचलो लज्जया । दूरे स्तब्ध इलावृते निवसते नो यत्र पुंसां गति ॥
किं च ग्रस्यदरातिवामनयनानेत्राम्बुभिर्वर्धितस्तेजोभिर्वडवामुखोत्थहुतभुक्तुल्य कथं नो भवेत् ॥ १० ॥
आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दीक्षिताख्यावतंसो भट्टश्रीनीलकंठ स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीय ॥
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धान् । दृष्ट्वा सम्यग्विविच्य प्रविततकिरणो भास्करस्तन्यतेऽयं ११
प्रैतास्कैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितं ॥
उन्मोन्मितातो न हि तेन का काचित्प्रपुष्पहीनापचितिर्न हीयते ॥ १२ ॥
संस्काराचारकाला समुचितरचना श्राद्धनीतोविवादो
दानोत्सर्गप्रतिष्ठा जगति जयकरा सङ्गतार्थानुबद्धा ।
प्रायश्चित्त विशुद्धिस्तदनु निगदिता शांतिरेवं क्रमेण
ख्याता ग्रन्थेऽत्र शुद्धे बुधजनसुखदा द्वादशैते मयूखा ॥ १३ ॥
भगवंतभास्कराख्ये ग्रन्थेऽस्मिन् शिष्टसमते च तत । प्रायश्चित्तमयूखः प्रतन्यते नीलकंठेन ॥ १४ ॥

---

१ अई–श्रीरविर्जयति, क–सूर्याय नम । यर–श्रीनारायणो जयति, ब–श्री श्रीगुरुचरणकमलेभ्यो नम ।
२ अबकयईरनफ–नमामिभास्वत्पदपङ्कज तद् श्रीनीलकण्ठोऽस्मय प्रकुर्वे । स्मृत्योपदेशान् गुरुशङ्करस्य, विनिर्णय प्राप विशुद्धिहेतु । ३ ह्र पाठ इमं चतुर्दशश्लोका ह्र–पुस्तके एव दृश्यन्ते । छ–र्थं, लघ पाम, कअयईकई–न. न–उरु । ४ ब–क्ताहके, य प्रचारके ।

पापविशुद्धिहेतुत्वं प्रायश्चित्तस्याह याज्ञवल्क्यः ( प्रा. २१९–२० )
"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥
" तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये " ॥ इति । अनिग्रहादिति पर्युदाससंग्रहार्थं ।
विहिताननुष्ठाननिषिद्धसेवननिमित्ते विहितं कर्म प्रायश्चित्तं । प्रारब्धपापनाशार्थे तु
५ तत्पदं गौणं । माधवविज्ञानेश्वरावप्येवं । यत्तु शूलपाणीयटोडरानंदयोः पापनाशकं
कर्म प्रायश्चित्तमिति तत्र तुलापुरुषादावतिव्याप्तेः कल्पतरोःपप्रायश्चित्तेऽव्याप्तेश्च ।
एवं प्रायश्चित्तपदस्य रूढत्वे योगमप्याहांगिराः
"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतमिति" ॥
यत्तु पक्षधरमिश्रभक्तूपाध्यायटोडरानंदकृतः "प्राय. पापं विजानीयाच्चित्तं तस्य
१० विशोधनमिति " च पेठुः तन्नाकर्णितम्यः ।
इदं च प्रायश्चित्तं निमित्ते विधानान्नैमित्तिकं पापनाशकतया काम्यं च । अत एव बृहस्पतिः
" प्रायश्चित्तं यत्क्रियते तन्नैमित्तिकमुच्यते " इति । जाबालः " अतः काम्यं
नैमित्तिकं च प्रायश्चित्तमिति स्थितिरिति " । एवं च सर्वांगोपसंहारासामर्थ्ये-
ऽप्यधिकारे विरुद्धः । अत्राधिकारस्त्रैवर्णिकत्वाना तावत्त्रित्वादप्रतिबद्ध एव ।
१५ शूद्रस्याप्याहतुः शंखलिखितौ " कृच्छ्राणि द्विजातीनामेव नावरस्य कामं धर्मेप्सोरप्रति-
षिद्धः । साधारणो हि धर्मो नियमश्चेति " । कृच्छ्राणि काम्यानि । धर्मेप्सोः प्रायश्चित्ता-
र्थिनः । याज्ञवल्क्योऽपि (प्रा. २६२) " शूद्रोऽधिकारहीनोऽपि कालेनानेन शुध्यतीति " ।
अधिकारहीनो जपहोमाधिकारहीनो जपहोमाधिकारशून्यः । काल. प्रायश्चित्ताधिकरणं ।
तस्य विशेषमाहांगिराः
२० "तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितं । प्रायश्चित्तं प्रदातव्यं जपैर्होमविवर्जितमिति" ॥
स एव
"शूद्रः कालेन शुध्येत गोब्राह्मणहिते रतः । दानैर्वाऽप्युपवासैर्वा द्विजशुश्रूषया तथेति" ॥
यत्तु मिताक्षरायां स्मृत्यंतरे ( पृ. २७९ पं. ३० )
"कृच्छ्राण्येतानि कार्याणि सदा वर्णत्रयेण तु । कृच्छ्रेष्वेतेषु शूद्रस्य नाधिकारो विधीयत" ॥ इति
२५ तत्काम्यकृच्छ्रपरं । यत्तु मनुः ( १०।१२६ )
" न शूद्रे पातकं किंचिन्न च संस्कारमर्हति । नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनमिति" ॥
तदर्थमाह मेधातिथिः । द्विजाधिकारिकं भक्ष्याभक्ष्यप्रकरणाल्लशुनादिभक्षणे पापं
नाऽस्ति विहितविवाहव्यतिरिक्तसंस्कारं च नार्हति । उपवासादावस्य न नित्योऽधिकारः
तदकरणान्न प्रत्यवैति । तस्मादेव धर्मादस्य प्रतिषेधनमपि नास्ति । करणेऽभ्युदयोऽस्त्येवेति

१ अई प्रारब्धपापनाशकं कर्म प्रायश्चित्तमिति । २ घ–षिद्ध । ३ घ–तप । ४ खगघ–प्रायश्चित्तं ।

यदाति केचिद्विद्वांस " स्त्रीणा शूद्रसमानतामिति " सूतसंहिताद्युक्ते । " शूद्राणा तु सधर्माणा सर्वेऽप्यध्वसजा स्मृता " इति स्मृतेश्च ( मनुस्मृ. १०।४१ ) । स्त्रीणा व्यभिचारजाना चाधिकार । अत एव प्रायश्चित्तमपि शूद्रवदेव । विष्णुः
" विप्रे तु सकल देय पादोन क्षत्रिये स्मृत । वैश्येऽर्द्धं पादशेष तु शूद्रजातिषु शस्यत " ॥ इति ।
यत्तु कश्यपः　　५
" विप्रार्द्धं क्षत्रियस्योक्त तदर्द्धं वैश्यजातिषु । तदर्द्धमेव शूद्राणा प्रायश्चित्त विदुर्बुधा " ॥ इति ।
तदकामकृतविषयमिति माधवः । यत्त्वंगिराः
" पर्षदा ब्राह्मणानान्तु सा राज्ञा द्विगुणा मता । वैश्याना त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतमिति " ॥
भविष्ये
" चतुर्गुण तु शूद्राणा पर्षदुक्ता महात्मभि । पर्षद्वच्च व्रत प्रोक्त शुद्धये पापकर्मणामिति " ।　　१०
एतच्च प्रतिलोमापवादेषु " द्विगुणास्त्रिगुणो देय " इति याज्ञवल्क्योक्तेर्द्वाधिक्यानुमितदोषगौरवात्प्रातिलोम्यकृतचातुर्विध्यसारूप्यपर
" द्विगुण त्रिगुण चैव चतुर्गुणमथापि वा । क्षत्रविट्शूद्रजातीना ब्राह्मणस्य वधे व्रतमिति "
प्रजापत्युक्तेर्विप्रवधपरं च । आश्रमिणा विशेषमाहांगिराः
" गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि । शौचवच्छोधन प्रोक्तमर्वाग्ब्रह्मनिदर्शनादिति " ॥　　१५
शौचवद्द्विगुणादि । तथा च मनुः ( ५।१३६ )
" एतच्छौच गृहस्थस्य द्विगुण ब्रह्मचारिण । त्रिगुण तु वनस्थाना यतीना तु चतुर्गुणमिति " ॥
गृहस्थोक्ति स्नातकोपलक्षिका । अन्यथा विधुरादे प्रायश्चित्तमेव न स्यात् । ब्रह्मनिदर्शन तत्त्वज्ञान । ज्ञानोत्पत्त्यतर तूत्पन्नपाप ज्ञानेनैव नाश्यते । " ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति " भगवद्गीतोक्तेः ( अ ४।३७ ) । ब्रह्मचारिणो द्वैगुण्योक्ति षोडश-　　२०
वर्षोर्ध्वं । षोडशवर्षसमाप्तिपर्यंत त्वाहांगिराः
" अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडश । प्रायश्चित्तार्द्धमर्हति स्त्रियो रोगिण एव चेति " ॥
आदिपर्वणि
" आचतुर्दशकाद्वर्षान भविष्यति पातक । परत कुर्वतामेव दोष एव भविष्यतीति " ॥
अंगिराः " अर्वाक्तु द्वादशाद्वर्षादशीतेरूर्ध्वमेव वा । अर्द्धमेव भवेत्पुसा तुरीय तत्र योषितामिति " ॥　　२५
अत्रोच्चावचावधितारतम्य शक्तितो ज्ञेय । यत्तु विष्णुः
' स्त्रीणामर्द्धं प्रदातव्य वृद्धाना रोगिणा तथा । पादो बालेषु दातव्य सर्वपापेष्वय विधिरिति " ॥
तदुपनयनादर्वाक् ज्ञेय । शंखः

१ यरघ-प्रायश्चित्त । २ यरघ-तथा च विष्णु । ३ घव-शेषस्तु । ४ ह्ह्-दिति । ५ घ-चे पापे ।
६ घ-अशेषाच रक्षावधि ।

" ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वाऽन्य सुहृज्जन ॥
"अतो बालतरस्यास्य नापराधो न पातकं । राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते"॥ इति ।
कुमारः "भयमूत्रपुरीषाणां भक्षणे नास्ति कश्चन । दोषस्त्वा पञ्चमाद्वर्षादूर्ध्वं पित्रो सुहृद्गुरोरिति '॥
गौतमः ( २।१ ) " प्रागुपनयनात्कामचारवादभक्षा " इति " सुरापाननिषेधस्तु
५ जात्याश्रय इति स्थितिरिति " कुमारवाक्यात्

" अनुपेतस्तु यो बालो मद्यं मोहात्पिबेद्यदि । कृच्छ्रत्रयं गुरुः कुर्यान्माता भ्राता तथा पितेति "
स्मृतेश्चानुपेतस्य दोषोऽस्त्येवेति विज्ञानेश्वरः । एतद्वचनद्वयस्य पञ्चमवर्षप्रभृत्युत्तरपरतया
ऽप्युपपत्तेस्तत्रानुपेतस्य दोष । वर्षचतुष्टयपर्यंतं न दोष इति तु युक्त । यत्तु स्मृत्यंतरे
"जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः । स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः " ॥
१० " भक्ष्याभक्ष्ये तथा पेये[1] वाच्यावाच्ये तथानृते । तस्मिन्काले न दोषः स्यात्स यावन्नोपनीयते '
इति तन्मद्येतरपर । इद चार्द्धपादादिपरिमाणमुपदिष्टमौलिकद्वादशाब्दिकाद्येवापेक्ष्य
प्रवर्त्तते । न तु क्षत्रियादिनिमित्तद्वैगुण्याद्यपेक्षया । ब्रह्मचारित्वादिनिमित्तक द्वैगुण्या
द्यप्येव । अर्द्धपादद्वैगुण्यत्रैगुण्यादिविधीनामुपजीव्योपजीवकभावाभावेन परस्परानालोचनया
मौलिकविधिमात्रालोचनेनैव प्रवृत्ते । प्रयोजकादीनां फलमाहापस्तंबः ( २।२९।१ )
१५ " प्रयोजयिताऽनुमन्ता कर्त्ता चेति स्वर्गनरकफलेषु कर्मसु भागिन " इति । पैठीनसिः
" हन्ता मन्त्रोपदेष्टा च तथा संप्रतिपादक । प्रोत्साहक सहायश्च तथा मार्गानुदेशक ॥
" आश्रय शस्त्रदाता च भक्तदाता विकर्मिणां । उपेक्षक शक्तिमाश्चेद्दोषवक्ताऽनुमोदक ॥
" अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेत् " । हन्ता साक्षाद्धन्ता । मन्ताऽनुमन्ता ।
प्रवृत्तप्रवर्त्तक । उपदेष्टा मार्गोद्धाटनादिकृत् । संप्रतिपादक[2] पलायमानमभियुपरुध्य परेभ्यो
२० हन्तारं यो रक्षति । प्रोत्साहक स्तावक । सहाय सहगन्ता । अनुमोदको हन्तुर्हर्षमनु
पोद्भावयति । भक्तपदमौषधादेरप्युपलक्षकं । एते च निषिद्धक्रियोद्देशे सत्येव दोषभाजो
नान्यथा । तथा च याज्ञवल्क्यः

" ओषध स्नेहमाहार ददत् गोब्राह्मणे द्विज । दीयमाने विपत्तिः स्यात्र स पापेन लिप्यते"॥
तथा "दाहच्छेदशिराभेदप्रयोगैरुपकुर्वतां । द्विजानां गोहितार्थं तु प्रायश्चित्तं न विद्यते । " पराशरः
२५ " कूपखाते च धर्मार्थे गृहदाहे च या मृता । ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते ' ॥ इति ।
औषधदाने विशेषमाहांगिराः

"औषधे तु न दोषोऽस्ति स्नेहच्छया तु पिबेद्यदि । अन्यथा दीयमाने तु प्रायश्चित्तं न संशयं"॥इति ।

---

१ अवकयरनदघ—न दातव्य । २ ह—स्तेय । ३ नघयलअइ—हेये, घइ—तेयो, क—रते । ।
४ अवकयरनलयई—हष्यति । ५ कघलयई—विद्यते ।

उद्देश्यमरणफलकमन्यूत्पादने तु विष्णुः

"आकुष्टस्ताडितो वाऽपि धनैर्वाऽपि वियोजितः । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकमिति" तथा "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च" । उत्तरार्द्धं तदेव । अयं चाक्रोशकादिर्निमित्तीत्युच्यत इति निबंधकृतः । तेन "निमित्ती पादमाद्ध्यादिति" पादप्रायश्चित्तमेतस्य भवति । या तु "सबन्धेन विवादे च शुष्कवादेन कोऽपि" इति वार्षिकं प्रायश्चित्तं प्रक्रम्य भविष्योक्तिः सा परिहासकृताक्रोशपरा । भविष्ये

"पुत्रः शिष्यस्तथा भार्या शासतश्चेत्प्रणश्यति । न शास्ता तत्र दोषेण लिप्यते राजसत्तम" ॥ इदं च पुत्रादीनुपक्रम्य

"प्राप्तापराधास्ताड्याः स्यू रज्वा वेणुदलेन वा । पृष्ठतस्तु शरीरस्य नोत्तमाङ्गेन वक्षसि" । "अतोऽन्यथा तु प्रहरन् चोरस्याप्नोति किल्बिषमिति" मनूक्तायां ( ८।२०१ ) शास्तौ ज्ञेयं । अधिकशासने तु दोष एव । निमित्तिदोषमपवदति विष्णुः

"उद्दिश्य कुपितो विप्रस्तोषितः श्रावयेत्पुनः । तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते" ॥ तोषितो निमित्तिना द्वयोरुच्छ्रावणे कृते न दोष इति सबंधः । द्वयोरित्यनेकोपलक्षणम् । मदनस्तु "यस्य कस्यचिदुच्छ्रावणे कृते द्वयोराक्रोशात्मघातयोर्दोषो नास्तीत्याह विष्णुः

'असबंधेन यः कश्चिद्द्विजः प्राणान्तमुत्सृजेत् । तस्यैव तद्भवेत्पापं न तु यं परिकीर्तयेत्" ॥

बृहस्पतिः

"आक्रुष्टस्तु यदाक्रोशंस्ताडितः प्रतिताडयन् । हत्वाऽऽततायिनं चैव नाततायी भवेन्नरः" ॥ याज्ञवल्क्यः ( प्रा २८३ ) "कृच्छ्रत्रयं गुरुः कुर्यान्म्रियते प्रहितो यदीति" । अत्र सप्रतिपादकारुण्यानुग्राहकस्य व्यापारबाहुल्यान्मौलिकमेव पादोनं । आज्ञाप्रार्थनादिना प्रयोजकस्यार्द्धं । प्रवृत्तप्रवर्त्तकस्यानुमन्तुः सार्द्धपादं । "प्रयोजयिताऽनुमन्ता कर्त्ता वेति स्वर्गनरकफलेषु कर्मसु भागिनो यो भूय आरभते तस्मिन्फलविशेष" इत्यापस्तंबोक्तेः (२।२९।१–२)। एतेषां प्रायश्चित्तेयत्तायां तु प्रकारा एव प्रमाणं । सुमंतुः

"तिरस्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि । निर्गुणं सहसा क्रोधाद्गृहक्षेत्रादिकारणात् ॥ त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीं । गच्छेद्वाऽपि विशुद्ध्यर्थं तत्पापस्येति निश्चितं" ॥ बृहस्पतिः "नाततायिवधे हन्ता किल्बिषं प्राप्नुयात्कचित् । विनाशार्थिनमायातं घातयन्नापराध्नुयात्" वसिष्ठः ( परि )

१ घ–यन्न । २ न–दष्या । ३ ब–शास्तौ । अबकनलघयईर–पाठ । ४ झ–स्तीत्याह सुमंतु ।

" अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह । क्षेत्रदारापहारी च षडेते ह्याततायिन " ॥
अपरार्के व्यासः
" उद्यतासिं विषाग्निं च शापोद्यतकरं तथा । आथर्वणेन हन्तारं पिशुनं चैव राजसु ॥
"भार्यातिक्रमिणं चैव विद्यात्सप्ताततायिन ।यशोवित्तहरानन्यानाहुर्धर्मार्थहारकान्" ॥कात्यायनः
" अनाक्षारितपूर्वो यस्त्वपराधे प्रवर्तते । प्राणद्रव्यापहारे च प्रवृत्तस्याततायिन " ॥
अनाक्षारितोऽनपकृत । तेन पूर्वकृतापराधस्य मारणाद्युद्यतस्य नाततायितेति तद्वधे दोष एव । आततायिवधे दोषाभावश्च गोविप्राततायिभिन्नविषय इति मिताक्षराऽपरार्कादौ । " नाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति" सुमंतूक्तेः।कल्पतरौ तु "आततायिन्यदोषोऽन्यत्र गोब्राह्मणात् " । यदा हन्यात्प्रायश्चित्त न स्यादिति पाठ । अत्र युगातरे युद्धे विप्रवधे प्रायश्चित्ताभाव । युद्धं विना हनने तु प्रायश्चित्तम् । "आततायिद्विजाग्र्याणा धर्मयुद्धेन हिंसनमिति" कलिनिषिद्धेषु पाठात् । प्रपचित तत्भ्रातृचरणैं कलिवर्ज्यनिर्णयेऽस्माभिश्च व्यवहारमयूखे । आततायिवधे प्रायश्चित्त भविष्ये
" हत्वा तु प्रहरन्त वै ब्राह्मण वेदपारग । कामतश्चेच्चरेद्वीर द्वादशाब्दान्युत्तम " ॥
अथ कामाकामकृतप्रायश्चित्तव्यवस्था । बृहस्पति
" कामाकामकृत त्वेव पातक द्विविध स्मृत । पुरुषापेक्षया चैव निष्कृतिर्द्विविधा स्मृतेति " ॥
यत्तु याज्ञवल्क्यवाक्ये ( प्रा २२६ )
" प्रायश्चित्तैरपैत्येनो यदज्ञानकृत भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते " ॥
इत्यज्ञानपद तदन्यकामपर । अत एव तत्प्रतियोगिरूप कामत पद सगच्छते । एवं वाक्यान्तराणि बुद्धिज्ञानाभिसधिपदानि कामपराणि । अबुध्यज्ञानाभिसधिपदानि वा कामपराणि । तेन बलात्कारिते पापे सत्यपि ज्ञाने न द्विगुण प्रायश्चित्तं । तत्प्रयोजककामाभावात् । अत्राकामकृतपापस्य व्यवहारनिरोधिका नरकजनिका चेति शक्तिद्वयमपि नश्यति प्रायश्चित्तेन । कामकृतस्य तु व्यवहारनिरोधिकैव नश्यति । न तु नरकानुकूलेति विज्ञानेश्वरादयो (पृ २३६।२३७) निबधकृत । एतच्च येर्श्चाहृत्य व्यवहारो निषिद्धस्तत्पर । तानि चाह गौतमः ( २१।१।२ ) " ब्रह्महसुरापगुरुतल्पगमातृपितृयोनिसबधागस्तेननास्तिकनिंदितकर्माभ्यासिपतितात्याग्यपतितात्यागिन पतिता । पातकसयोजकाश्चेति " । एतेष्वेव व्यवहारो निषिद्धो नान्यत्र । " एनस्विभिरनिर्णिक्तैर्नार्थं कचित्समाचरेदिति " ( ११।१८९ ) मानवीयमेनस्विपदमपि ब्रह्महादिपरमेव । इतरपापेषु तु नरकानुकूलेनापत्ते । सर्वरहस्यपापेषु ब्रह्महत्यादिप्रकारेषु मरणातिकप्रायश्चित्ते चैव । व्यवहारनिरोधना-

१ बल–बलात्कारिते । २ अवटनलघयरई–येश्चाहृत्य । ३ ह्य–ब्रान । ४ अवटनङयरई–नरकानुकूलापि नाश्यते ।

भावेन तदनुकूलशक्त्यभावात । श्रीशंकराचार्यास्तु " कामतो व्यवहार्या-स्त्वित्यकारप्रश्लेषेणेद याज्ञवल्क्यवचो " बहिस्तमयथापि स्मृतेराचाराच्चेति " सूत्रे कृतप्रायश्चित्तनैष्ठिकब्रह्मचार्यादिपर ।

"आरूढो नैष्ठिके धर्मे यस्तु प्रच्यवते पुन । प्रायश्चित्त न पश्यामि येन शुध्येत्स आत्महेति"॥

" आरूढपतितं विप्रं मडलाच विनि सृत । उद्बद्धक्रमिदष्ट च स्पृष्ट्वा चान्द्रायण चरेदिति " १

च स्मृतेरिति । येन शुद्धयेद्व्यवहारयोग्यो भवेत्तत्प्रायश्चित्त न पश्यामीति कृतप्रायश्चित्तमप्यारूढपतितादिक स्पृष्ट्वा चान्द्रायण कुर्यादिति वाक्यद्वयार्थमित्याहु ।

तत्सूत्रे वाचस्पतिमिश्रास्तु बालघ्नादिपरमप्याहु

"बालघ्न श्च कृतघ्नाश्च विशुद्धानपि धर्मत । शरणागतहतॄश्च स्त्रीहतॄश्च न सविशेदिति " ॥

स्मृते । न सविशेत्न व्यवहरेत् । अत एव याज्ञवल्क्य (प्रा. २९९) १०

" शरणागतबालस्त्रीहिंसकान्सविशेन्न तु । चीर्णव्रतानपि सत कृतघ्नसहितानिमान् " ॥

तेनाचार्यमतेऽवकीर्णनैष्ठिकादिभिर्बालघ्नादिभिश्च कृते प्रायश्चित्ते नरकानुकूल्य शक्तिर्नाश्यते । व्यवहारनिरोधिका त्वस्त्येव । इतरपापेषु कामकृतेष्वपि शक्तिद्वयमपि नाश्यते द्विगुणप्रायश्चित्तेन । तदाहांगिरा " विहित यदकामाना कामात्तद्द्विगुण भवेत् " । महापापे तु कामकृते मरणमेव । तथा च स एव १५

" य कामतो महापाप नर कुर्यात्कथचन । न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते " ॥

तथा " प्राणान्तिक तु यत्प्रोक्त प्रायश्चित्तं मनीषिभि । तत्कामकारविषय विज्ञेय नात्र सशय " ॥

व्यास " कामतो ब्राह्मणवधे निष्कृतिर्नास्ति जीविन ।

"यस्तु सर्वं परित्यज्य यावज्जीव चरेद्व्रत । स विशुद्ध शुभान् लोकान् विप्रो गच्छेन्नसशय "॥

अथ तंत्रप्रसंगौ । तत्रानेकनिमित्तेषु प्राजापत्यादीना सजातीयाना प्रायश्चित्ताना २०

देशकालकर्त्रैक्ये तत्र । तत्र चैकस्मिन्निमित्ते प्राजापत्यद्वयमेकत्रैकमिति विशेषण ग्रहणे द्वयमेव कार्य । तेनैवैकप्राजापत्यकार्यमपि सिद्धयतीति प्रसग । यथा गौतमः । ( २१।१।२० ) " द्वे परदारे त्रीणि श्रोत्रियस्येति " सामान्यत परदारमात्रगमने श्रोत्रियपत्नीगमने च श्रोत्रियपत्नीगमननिमित्तक त्रैवार्षिकमेव केवल कार्य* तेनैव द्वैवार्षिकमेव केवल कार्य* । तेनैव द्वैवार्षिकसिद्धि । शंखलिखितौ २५

"गुप्ताया वैश्यायामवकीर्णे सवत्सर त्रिषवणमनुतिष्ठेत् क्षत्रियाया द्वे वर्षे ब्राह्मण्या त्रीणि वर्षाणीति"

अत्र तिसृष्वप्यवकीर्णेषु ब्राह्मणीनिमित्तकत्रैवार्षिकमेव कार्यमिति । निमित्ताना व्याप्यव्यापकभावेऽपि व्याप्यनिमित्तेन व्यापकनिमित्तस्य प्रसगत सिद्धि । यथा

१ इअ–उद्ध्य नलघवयर उद्बद्ध । २ चक–शुद्धो । *—ङ पाठ ।

"अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यंतरशोणित" ॥ इति । अत्रासृक्पातने सत्यवगूरणनिपातनयोर्न पृथक्त्वनिमित्तप्रायश्चित्तप्रयोजकतेति । ब्रह्महत्याप्रायश्चित्ते तु तत्प्रकरणे तंत्रावापौ वक्ष्येते ।

अथ प्रायश्चित्तातिदेशः । स त्रिविधः । वाचनिकातिदेशस्ताद्रूप्यातिदेशः साम्यातिदेशश्चेति । तत्र वाचनिकं तावत् । तमाह याज्ञवल्क्यः(प्रा. २५७) "यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणिव्रतं ।" ताद्रूप्यातिदेशमप्याह स एव (प्रा. २३२)

" पितुःस्वसारं मातुश्च मातुलानीं स्नुषामपि । मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥ "आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग" इति । साम्यातिदेशमप्याह स एव (प्रा. २२८)

" गुरूणामध्यधिक्षेपो वेदनिंदा सुहृद्वधः । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनमिति " ॥

१० अत्र साम्यातिदेशेऽर्द्धं ताद्रूप्यं वाचनिकयोस्तु पादोनं । राजसमो मंत्रीत्यादौ किंचिद्धीन एव समपदप्रयोगात् । महापातकातिदेशविषयाणां च पातकसंज्ञत्वान्महापातकतुल्यानि पापान्युक्तानि यानि तु तानि पातकसंज्ञानि तन्न्यूनमुपपातकमिति पापकथनं महापापान्न्यूनत्वप्रतिपादनार्थेति विज्ञानेश्वरादयः । अत्र केचित् । इवार्थेकाहे समानमितरैर्व्यनेनेति वाचानिकातिदेशे न्यूनत्वाप्रतीतेरिहापि न न्यूनतेति ।

१५ राजसमो मंत्रीत्यादौ तु न्यूनता प्रत्यक्षगम्या । अस्तु वा समशब्देन न्यूनताप्रतीतिकलहः । पादोनार्द्धादीयता तु निष्प्रमाणिकेति । अत्रास्मज्ज्येष्ठभ्रातृचरणाः । महापापतुल्येषु पातकसंज्ञेषु विशेषतः प्रायश्चित्तानुक्तेस्तदाकांक्षायामर्थवादे महापापजन्यनरकार्द्धावगतेः प्रायश्चित्तेऽप्यर्द्धताकल्पने तमेवार्थवादमाहांगिराः

"पातके तु सहस्रं स्यान्महत्सु द्विगुणं तथा । उपपापे तुरीयं स्यान्नरकं वर्षसंख्ययेति " ॥ यत्तु विष्णुः

२० " अतिपातकिनः पर्यायेण पच्यंते कल्पं । मन्वंतरे महापातकिनः । अनुपातकिनश्चोपपातकिनश्चतुर्युगमिति " तदप्यासपरं । अनुपातकं महापातकतुल्यं पातकसंज्ञं । ताद्रूप्यवाचनिकातिदेशे तु पादोनमेव । ब्राह्मणीपुत्रस्य क्षत्रियायां मातरि गमने पादहान्या द्वादशवार्षिकमेवमन्यवर्णास्विति मिताक्षरोक्तस्मृत्या द्वादशाब्दमुक्तं । तच्च न केवलं हीनवर्णामातृगमन एव किंतु मातुः सपत्नीमित्याद्युक्तसर्वताद्रूप्यवाचनिकातिदेशविषयं । सर्वेषां समानधर्मत्वात् ।

२५ यथाहोशनाः

" बहूनामेककर्माणामेकस्यापि यदुच्यते । सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृता " ॥ इति । अत एव मिताक्षरायां रजक्यादीनां पंचानां गमने चांद्रायणद्वयं प्रायश्चित्तमापस्तंबोक्तमुक्त्वा " रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते अंत्यजाः स्मृता " ॥ इति सप्तांत्यजस्त्रीगमनेऽपि तदेव प्रायश्चित्तमुशनोवाक्यबलादुक्तमिति युक्तमुत्पश्यामि ।

१ ग-स्थे ।

एतेनातिदेशे पूर्णप्रायश्चित्त वदन्तो शूलपाणिभवदेवावपास्तौ । किंच सर्वत्र द्वादशाब्दविधित्साया स्मृतिपु तदुपदेश एव स्यात् । न तु कचिदुपदेश क्वचिच्चातिदेश इति नि प्रयोजन द्वैविध्य । न चात्रान्यूनतातिरिक्त सौर्यादिष्विव दर्शपूर्णमासिकातिदेशस्योहादिप्रयोजनमस्ति । यच्च भवदेव । साम्योक्तिरर्थवाद । अन्यथा ब्रह्महत्यासुरापानस्तेनेपु मिथ्योत्कर्षोक्तिवेदनिंदादिष्वपि द्वादशाब्द स्यात् । कचित्तद्दिदेशे मनुष्यहरणे मनुना चान्द्रायणादिस्वल्पप्रायश्चित्ततराम्नानाचेति । तदपि न मिथ्योत्कर्षोक्तिवेदनिंदादिपु द्वादशाब्दाद्यपेक्षयार्द्धस्येष्टत्वान्मनूक्तास्वल्पप्रायश्चित्तस्य नीचमनुष्यापहारपरत्वाच्च । इत्यतिदेशः ॥ ५

अथ पापिनामनुतापार्थं कर्मविपाक उच्यते । यमः

" पतिते सप्रयुक्तश्च कृतघ्नो गुरुतल्पग । एते पतति सर्वेपु नरकेष्वनुपूर्वश ॥

" महापातकसयुक्ता युग तिष्ठत्यधोमुखा । रौरवे कूटसाक्षी च यश्च मिथ्याभिशसक ॥ १०

" कुल्माहे पक्षवादी स चाप्यत्र पतेन्नर " ॥ कुल्माहे कुलसंदेहे । स एव

" न्यासापहर्ता कुमतिर्विषमो यश्च वृत्तिपु । ततकुंभे स्वपृगामी गोघ्नो राजभटाश्च ये "॥

राजभट्टा राजबलेनोपद्रावका ।

" महाज्वाले दुहितर स्नुपा गत्वा च मातर । अजाविक शौण्डरिकस्तेनश्च क्रोधनो नर ।

" रगोपजीवी पशुहा शकुनी ग्रामयाजक ॥ १५

" अभक्ष्यभक्षो वाताशी विप्रो धर्मपुरस्कृत । अगम्यागामी गरदो नारक शबल व्रजेत् " ॥

शकुनी पक्षिपोषक । वाताश्युक्तो हेमाद्रौ विष्णुना

" देश गोत्र कुल विद्या मात्रार्थं यो निवेदयेत् । वैवस्वतेपु धर्मेपु वाताशी स प्रकीर्तित ॥

" सर्वज्ञा वयमित्येवमभिमानरता नरा । वाताशिन परित्याज्या श्राद्धे दाने च लपट्ट ॥

" वेदविक्रायिणो ये च केशविक्रयिणस्तथा । वेदाना दूषका ये च समयाना च दूषका ॥ २०

" दूषका धर्मशास्त्राणा हेतुवादकुतूहला । एते विहगमे घोरे पच्यते पापकारिण " ॥

समयाना दूषका । सभूय व्यवस्थापितार्थ यतिक्रमकारिण ।

" सर्वविक्रयकर्त्तारो मित्राणा भेदकारका । निर्मर्यादा क्रोधनाश्च यर्ज्येश्वर्यसयुता ॥

" कोटरे विनिपात्यते बभ्रुभक्षाश्च वाणिजा " ॥ बभ्रुभक्षा बभ्रुपीडका ।

" विमुखे पतिते घोरे मर्यादा यश्च लघति । शाखामृगघ्नो गोघ्नश्च कृमिभक्ष्य व्रजति ते "॥ २५

विमुख युद्धादिपु पराङ्मुख । पतिते युद्ध एवेति शेष ।

" एकाकी मिष्टमश्नाति वचयित्वा सुहृत्सुतान् । दारान् भृत्यातिर्थींश्चैव तथा सत्रधिबाधवान् ।

" उत्सन्नपितृदेवेष्ट पशुघाती च यो वृथा । लालके नरके घोरे दुर्गंधे पात्यते नर ॥

---

१ व-तन्मूल । २ घ—स्यो । ३ वलघच—अजार्ये इकअ—मजार्ये ।

" मानहर्त्ता कुलघ्नश्च स्वर्णहारी चिकित्सकः । पतति नरके घोरे क्रूरकर्त्ता विशेषतः ॥
" देवब्राह्मणविद्वेष्टा गुरुं यश्चावमन्यते । अवाक्शिरः प्रपद्येत रत्नं दूषयते च यः ॥
" मांसं मद्यं सुरां लाक्षां गन्धान्वस्त्रं घृतं पयः । विक्रीणाति य एतानि स तु पूयवहं व्रजेत् ॥
" अगारारामदाही च दुष्टः पापकृदेव च । पतन्ति रुधिरादौ तु कृतघ्ना दाम्भिका नराः ॥
९　" शूद्रहत्यां तु यः कुर्यात्तथा यो गुरुदूषकः । सीधुकृन्मधुकृद्दण्डी कर्मकारी निराकृतिः "॥
दण्डी निषिद्धदण्डग्राही । कर्मकारः कर्मकराधिष्ठाता । निराकृतिरस्वाध्यायः ।
" अतितीक्ष्णश्चण्डवृत्तिरुपघातपरः शठः । श्येनजीवी कालहिकः पुत्रोपाध्याय एव च ॥
" शूतसन्यवहारी च प्राणिहिंसारताश्च ये । वैतरण्यां निपात्यन्ते ये नरा बधघातकाः " ॥
अतितीक्ष्णः अस्युग्रः । चण्डवृत्तिः वधबन्धादिवृत्तिः । उपघातपरः परोपहतिप्रवणः । शठो
१०　मायावी । कालहिकः कलहो । पुत्रोपाध्यायः पुत्र उपाध्यायो यस्य सः । तथा
" असत्प्रतिगृहीतारस्तथैवायाज्ययाजिनः । नक्षत्रैर्जीवते यश्च सोऽन्धकारं प्रपद्यते ॥
" अप्राप्तदमको यश्च ब्राह्मणो वृषलीपतिः । गोश्वोष्ट्रहस्तिदमको मित्रध्रुक् सूचकस्तथा ॥
" असिपत्रवने घोरे पतन्त्यौरभ्रिका नराः "॥ अप्राप्तदमकोऽयोग्यदमकः । गोश्वोष्ट्रहस्तिदमकः ।
साऽस्य रतिर्यस्य स तथोक्तः । औरभ्रिका मेषाजाजीविनः ।
१५　" वृथाप्रव्रजितो यश्च सेतुभेत्ता च सूचकः । आश्रमात्पतितो यश्च सोऽग्निज्वालं प्रपद्यते ॥
" कृत्याकरानिष्टत्य ते नरा अनृतवादिनः । राजा च श्रुतिलोपी च सदशानरकं व्रजेत् ॥
" मृगव्याधस्तमो घोरं क्रूरकर्मा च वार्द्धुषिः । भक्ष्यते श्यामशबलैस्तीक्ष्णतुण्डैश्च वायसैः ॥
" ब्रह्मविक्रयिणो ये च ब्रह्म वा क्रीयते च यैः । क्रयविक्रयकर्त्ता च वार्द्धुषिः सोमविक्रयी ॥
[1]" गुरुश्च येऽवमन्यते वाक्यैस्तर्जयति च । विकर्माणः पापरताः शौचाचारविवर्जिताः ॥
२०　"अगोप्तारः कुलद्रव्याः परस्वानां च नाशकाः । कन्यानां दूषकाश्चैव समयानां च दूषकाः ॥
"क्रोधनाः पापशीलाश्च लुब्धा ये कृष्णगामिनः । स्रवन्ते च दिवा स्वप्ने व्रतिनो ब्रह्मचारिणः ॥
" सर्वे ते नरके घोरे पात्यन्ते पापकारिणः " । अगोप्तारोऽनश्यरक्षणीयानामिति शेषः ।
कुलद्रव्याः । छलेनार्जितधनाः । कृष्णगामिनः शूद्ररतास्त्रैवर्णिकाः । मनुः ( १२।५४ )
"बहून्वर्षगणान्घोरान्नरकान्प्राप्य तत्क्षयात् । संसारान्प्रतिपद्यन्ते महापातकिनास्त्विह"। याज्ञवल्क्यः
२५　" मृगश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति । खरपुल्कसवेनानां सुरापो नात्र संशयः " ॥
पुल्कसवेनौ चण्डालविशेषौ ।
" कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् । तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः "॥ स एव
" ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः । हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥

१ ई मेधा । २ क्षणात् । ३ या २०७

" यो येन सार्धं यात्येषा स तद्विधोऽभिजायते (२०७–९)"॥ फलविशेषा अथातरतोऽवसेया ।
अथ पर्षत् । लघुपराशर
" चत्वारो वा त्रयो वाऽपि वेदवतोऽग्निहोत्रिण । ब्राह्मणाना समर्था ये पर्षत्सा हि विधीयते ॥
" अनाहिताग्नयो येऽन्ये वेदवेदागपारगा । पच त्रयो वा धर्मज्ञा परिषत्सप्रकीर्तिता ॥
" वेदव्रतेषु स्नातानामेकोऽपि परिपद्भवेत् " । यमः • ५
" एको द्वौ वा त्रयो वाऽपि यद्ब्रूयुर्धर्मपाठका । स धर्म इति विज्ञेयो नेतरेषा सहस्रश '॥
मनुः ( १२।१११ )
" त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठक । त्रयश्चाश्रमिण पूर्वे पर्षदेषा दशावरा " ॥
हैतुको मीमासक । अंगिराः
"एकविंशतिसख्यातैर्मीमासान्यायपारगै । वेदागकुशलैरेव पर्षत्व तु प्रकल्पयेत् "॥ धर्मविवृतौ १०
" पातकेषु शत पर्षत्सहस्रं महदादिषु । उपपापेषु पचाशत्स्वल्पे स्वल्पा तथा भवेत् " ॥
पराशर
" अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्त ददाति य । प्रायश्चित्ती भवेत्पूत किल्बिष परिषद्व्रजेत् "॥
पर्षदुपस्थानमाहांगिरा
" सचैल वाग्यत स्नात्वा क्लिन्नवासा समाहित । क्षत्रियो वाऽपि वैश्यो वा पर्षद समुपतिष्ठति "॥ १५
अधिकारिमात्रोपलक्षणमिद ।
" उपस्थाय तत शीघ्रमार्त्तिमान्धरणीं गत । गात्रैश्च शिरसा चैव न च किंचिदुदाहरेत् "॥
पराशरः " पाप विख्यापयेत्पापी दत्वा धेनु तथा वृष "। इदमुपपातकविषय । महापापादि
ष्वधिक कल्प्यमिति मिताक्षरायां । अल्पपापेष्वपि तत्रैव
" तस्माद्द्विज प्राप्तपाप सकृदाप्लुत्य वारिणि। विख्याप्य पाप वक्तृभ्य किंचिद्दत्वा व्रत चरेत् "॥
किंचिद्दत्वा पाप विख्याप्य व्रत चरेदित्यन्वय । विष्णुः २०
" पादव्रते वस्त्रदान कृच्छ्रार्द्धे तैलकाचन । पादहीने तु गामेका कृच्छ्रे गोमिथुन स्मृत "॥
अत्र ' सर्वे धर्मविवेक्तार ' इत्यादिप्रार्थना पर्षत्प्रदक्षिणा च वक्ष्यते पद्धतौ । देवल.
' पापकृत्स्वकृत पाप कृत्स्नमाख्याय ससदि। तत्र स्नानेन याचेत निष्कृतिं तस्य कर्मण "॥
अगिराः " कृत्वा पाप न भुञ्जीत त्रिरात्रमहरेव वा। कुर्याद्ब्राह्मणशुश्रूषामाप्रदानाद्व्रतस्य तु "॥
एतच्च पर्षदुपस्थान प्रकाशप्रायश्चित्त एव न रहस्ये २५
" विख्यातदोप कुर्वीत पर्षदोऽनुमत व्रत । अनभिख्यातदोपस्तु रहस्य व्रतमाचरेत् " ॥
( प्रा ३० ) इति याज्ञवल्क्योक्तेः । प्रकाशेऽपि पर्षदसभवे स्वयमेव कुर्यात् । मनुः

१ अइ–पर्षदि । २ व–किंच ।

( ११।१४६ ) " मतिपूर्वमनिर्दिश्य प्राणातिकमिति स्थिति " । मतिपूर्वमथ मरणार्थं पृच्छतीति ज्ञात्वा । अंगिरा·

' ततस्ते प्रणिपातेन दृष्ट्वा त समुपस्थित । वृद्धा पृच्छति किं कार्यमुपविश्याग्रत स्थितम् ॥
" किं ते कार्यं यदास्माभि किं वा मृगयसे द्विज । तत्त्वतो ब्रूहि तत्सर्वं सत्य हि गतिरात्मन ॥
५ •" यदि चेद्रक्षसे नित्य नियत प्राप्स्यसे शुभ । यद्यागतोऽस्यसत्येन न त्व शुद्ध्यसि कर्हिचित् ॥
" एवं ते समनुज्ञात सर्वं ब्रूयादशेषत " ॥ विश्वामित्र

" जातिशक्तिगुणापेक्ष सकृद्बुद्धिकृत तथा । अनुबन्धादि विज्ञाय प्रायश्चित्त प्रकल्पयेत् " । उपदेशश्च पर्षदन्तर्गतेन पर्षदनुमत्या केनचित्कार्य । तथा चांगिरा " आहूय श्रावयेदेन पर्षदा यो नियोजित " । ' उपदेशश्च त्रि कार्य ' इति मदन पितामहचरणाश्च । स एव

१० "ब्राह्मणो ब्राह्मणाना तु क्षत्रियाणा पुरोहित । वैश्याना राजन्यश्चैव प्रायश्चित्त समादिशेत् ॥
" अगुरु क्षत्रियाणा यो वैश्याना वाऽप्ययाजक । प्रायश्चित्त समादिश्य तसकृच्छ्र व्रत चरेत्" ॥

स एव

" तथा शूद्र समासाद्य सदा धर्मपुरस्सर । प्रायश्चित्त प्रदातव्य जपहोमविवर्जित " ॥

जपहोमौ त्यागधानरूपाविशेषात् । पर्षदन्तर्गतस्योपदेशकत्वे प्रायश्चित्तमाह हारीत

१५ " प्रायश्चित्त तु निर्दिश्य कथ पापात्प्रमुच्यते । यत्पवित्र विजानीयाज्जपेद्वा वेदमातर " ॥

अंगिराः

" पच पूर्वमुदाहार्यं यथोक्त धर्मनर्त्तृभि । पश्चात्कार्यानुसारेण शक्त्या कुर्युरनुग्रह " ॥

पच प्रायश्चित्तविधायक । अनुग्रहं प्रायश्चित्तन्यूनता ।

पराशरः

२० " दुर्बलेऽनुग्रह कार्यस्तथैव शिशुवृद्धयो । अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहो भवेत् " ॥

देवलः " प्रायश्चित्त यथोद्दिष्टमशक्त्या तद्वशात्पुन । इष्यतेऽनुग्रहश्चापि पूजानुग्रहकारणात् ॥
" एको नार्हति तत्कर्तुमनूचानोऽप्यनुग्रह । धर्मज्ञा बहवो विप्रा कर्तुमर्हन्त्यनुग्रह ॥
" स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रह ये तु तत्पाप तेषु गच्छति" ॥

पूजानुग्राह्यस्य पूज्यत्व । अनुग्रहो दया । अनुग्रहरूपन्यूनतावधिमाह हारीतः

२५ " तस्मात्कृच्छ्रमथाप्यर्द्ध पाद वाऽपि विधानत । ज्ञात्वा बलाबल कार्य प्रायश्चित्त प्रकल्पयेत् " ॥

किंचिदशक्तो कृच्छ्र प्राजापत्य । अधिकाया पाद । अधिकतरायामर्द्धमनुग्रह कृत्वा प्रकल्पयेदित्यनुग्रह कृत्वेत्य याहारेण योज्य ।

अथेतिकर्तव्यता । विष्णुः

---

१ घ–ते । २ खई–कर्मभि । ३ नलघड–अनुग्रह । ४ घन तु ।

' सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकं । ग्रहणं संप्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते ॥
" दिनांते नखरोमादीन् प्रवाप्य स्नानमाचरेत् । भस्मगोमयमृद्वारिपंचगव्यादिकल्पितैः ॥
" मलापकर्षणं कार्यं बाह्यशौचप्रसिद्धये । दंतधावनपूर्वेण पंचगव्येन संयुतं ॥
" व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने । आचम्यातः परं मौनी ध्यायन् दुष्कृतमात्मनः ।
" मनःसंतापनात्तीव्रमुद्वहेच्छोकमंततः " ॥ इति । रोम श्मश्रु । आदिना केशग्रहणं । ५
ब्रह्मशौचं पापनिर्हरणं । पंचगव्येनेति भस्मादिसमस्तस्यैव पंचगव्यादेरनुवाद्भस्मादिस्नाना
पेक्षयाऽपि दंतधावनस्य पूर्वत्वसिद्धिः । आचारोऽप्येवं । पितामहचरणाश्च । व्रतहोमावशिष्ट
पंचगव्यप्राशनमिति महार्णवादौ । प्रायश्चित्तसंकल्प इति माधवशूलपाणी ।
घृतप्राशनमिति कल्पतरुः । 'न्युप्य केशनखान् पूर्वं घृतं प्राश्य विशुध्यतीति ' शंखलिखि
तोक्तेः । नद्यां स्नात्वा विशुद्ध्यतीति वा पाठः । तदा न घृतप्राशनं बहिर्ग्रामात् । जाबालिः १०
" आरंभे सर्वकृच्छ्राणां समाप्तौ च विशेषतः । आज्येनैव तु शालाग्नौ जुहुयाद् वाऽऽहुती पृथक् ॥
" श्राद्धं कुर्याद् व्रतांते च गोहिरण्यादिदक्षिणा । स्त्रीणां होमो न दातव्यः पंचगव्यं तथैव च" ॥
श्राद्धं वैष्णवं ।
" विधाय वैष्णवं श्राद्धं साकल्पं निजकाम्यया । धेनुं दद्याद्विजेभ्योऽथ दक्षिणां च स्वशक्तितः"
इति शातातपोक्तेः । व्रतांते प्रायश्चित्तांते । गोहिरण्यादिदक्षिणा देयेति संबन्धः । १५
अत्र विष्णुदेवतया पित्रादिदेवताबाधः । साकल्पत्वाद्धार्घ्यावाहनैः आकरणावनेजनपिंडस्वधा
वाचनानां बाधः इत्युक्तमस्मत्कृते श्राद्धमयूखे । आरंभे च समाप्तौ चेति श्राद्धे कुर्यादित्य
त्राप्यन्वेति । शूलपाणिस्तु गोहिरण्यादिदक्षिणामिति पपाठ । तदा प्रायश्चित्तांत एव
गोहिरण्यादिदक्षिणं श्राद्धं कार्यं नान्तावित्यर्थः । स्त्रीणां शालाग्निहोम एव न भवति । तस्यैव
प्रकृतत्वात् । लौकिकेऽग्नौ तु भवत्येव । स च विप्रद्वारेति केचित् । २०
" उपवासो व्रतं होमस्तीर्थस्नानजपादिकं । विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलमिति '॥
पराशरोक्तेः । तन्न । अस्य प्राप्तेषु अशक्तौ विरूपप्रतिनिधिनियमार्थत्वात् ।
प्रायश्चित्तांगजपहोमयोस्तु निषेधादेवाप्राप्तेस्तत्र तस्याप्रवृत्तिः । यदपि वाराहे
" अमंत्रस्य तु शूद्रस्य विप्रो मंत्रेण गृह्यत " इति तस्यापि परिभाषात्वेऽपि प्राप्तयोरेव
जपहोमयोः प्रवृत्तिः । एतेन यन्महार्णवमदनरत्नयोः स्त्रीशूद्राणांविप्रद्वारा समंत्रकौ २५
जपहोमौ भवत इति तत्परास्तं । पराशरः
" स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं समाचरेत् । पंचगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् " ॥
स्त्रीणां पंचगव्यस्य विहितप्रतिषिद्धत्वाद्विकल्पः । शूद्राणां तु नित्यं भवत्येव । शूद्रस्यापि

१ लघयर-प्रायश्चित्ते चिकीर्षिते । २ खरघ पत्र पंचगव्यविकल्पिते ।

विकल्प इति महार्णवे । तत्र तस्य स्त्रीपदगर्भनिषेधाप्रवृत्तेः । यत्तु "स्त्रीशूद्रास्तु सधर्माण" इति तद्विशेषाभावे स्त्रीशूद्रयोः समानधर्मत्वप्रतिपादनार्थं । अस्ति चात्र शूद्रे पंचगव्यस्य विशेषविधिः । यत्तु

"पंचगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् । उभौ तौ तुल्यकर्माणौ पूयाख्ये नरके वसेदि" त्यत्र

५ वचस्तद्रागप्राप्तप्राशननिषेधपरं ।

वपने विशेषमाह वसिष्ठः ( २४।४–६ ) " कृच्छ्राणां व्रतरूपाणां श्मश्रुकेशादि वापयेत् " अक्षिरोमशिखावर्जमिति । काम्यकृच्छ्रादौ वपनं नेतिमदनपारिजाते । गोवधे तु पराशरः " प्राजापत्यं चरेत्कृच्छ्रं गोघाती व्रतमुत्तमं । सशिखं वपनं कार्यं त्रिसंध्यमवगाहनमिति" ॥ विशेषमाह संवर्तः

१० " पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च । त्रिपादे तु शिखावर्जं सशिखं तु निपातनमिति"॥ सधवानां विशेषमाह वसिष्ठः

" केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः । गोवधादिषु[1] सर्वेषु छेदयेदंगुलद्वयं ॥

" सधवानां तु नारीणामलंकाराय सर्वदा । केशसंधारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तमैरिति" ॥ अंगुलत्रयमपि क्वाचित्पाठः । अत्र सधवापदाद्विधवानां सर्ववपनं । अत्र विशेषमाह

१५ पराशरः

" वपनं नैव नारीणां नानुव्रज्या जपादिकं । न गोष्ठे शयनं तासां न वसीरन् गवाजिनं ॥

" सर्वान्केशान्समुद्धृत्य छेदयेदंगुलद्वयं । सर्वत्रैवं हि नारीणां शिरसो मुंडनं स्मृतं " ॥ वासिष्ठे आदिपदं प्रायश्चित्तांतरपरं । तेन प्रयागादौ " मुंडनं चोपवासश्च सर्वतीर्थेष्वयं विधिरिति " देवलाद्युक्तेः सर्वमुंडनमेव । वेण्यां वेणीप्रदानेनेति लिंगाच्छाचाराच्च । तीर्थांतरे

२० न भवतीत्यन्यदेतत् । अपरार्के

"उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः । केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥

" दक्षिणं कर्णमारभ्य कर्मार्थं पापसंचये । शिखाद्यं नवसंस्कारे शिखायंतं शिरो वपेत् "॥ पापसंचये तन्निमित्ते प्रायश्चित्ते शिखामादौ कृत्वापश्चात्सर्वतो वपेच्चोदक्संस्थं । नवसंस्कारे चूडाकरणे दक्षिणकर्णोच्छिखांतं शिखामारभ्य वामकर्णांतं च वपेदित्युत्तरपद्यार्थः ।

२५ तैत्तिरीयके आसुरं वपनं निंदित्वा दैवक्रम उक्तः । " देवान्प्रक्रम्यत उपपक्षावग्रे वपंत अथ श्मश्रूण्यथ केशानिति " । मानुषेपि तत्रैव

मनुं प्रक्रम्य "स श्मश्रूण्येवाग्रे वपंत अथोपपक्षावथ केशानिति"। अत्राघानेष्टिसोमेषु दैवं। तत्र

---

[1] इहा–सर्वेषु ।

तस्य विधानात् । प्रायश्चित्ते तु देवमानुपे विकल्पेन । तत्राप्युदक्संस्थितायै दक्षिणश्मश्रुप-
पक्षौ वप्त्वाचामाविति । इदं च वपनं निषिद्धकालेऽपि कार्यं ।
"क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवं। पित्रादिमृतियात्रासु प्रायश्चित्ते च तीर्थके"।।इति स्मृते।
**निषेधाश्च । वृद्धगार्ग्यः**
"रव्यारसौरवारेषु रात्रौ पाते व्रतोऽहनि । श्राद्धाहप्रतिपद्रिक्ता भद्रा क्षौरेषु वर्जयेत् ॥ " ५
भद्रा द्वितीयाद्या । न करणं तिथिसाहचर्यात् । **व्यासः**
" नक्षत्रे तु न कुर्वीत यस्मिन्जातो भवेन्नर । न प्रौष्ठपद्योः कार्यं नैवाग्नेये तु भारत ॥
" दारुणेषु तु सर्वेषु दुष्टतारां तु वर्जयेत् " ॥ **बादरायणः**
" सिंहे धनुषि मीने च स्थिते सप्ततुरगमे । यात्रोद्वाहगृहारम्भक्षौरकार्याणि वर्जयेत् " ॥
**व्यासः** "विवाहमौंजीचूडासु वर्षमर्द्धं तदर्द्धकं। अतर्वत्न्या च जायाया नेष्यते केशवापनमि"त्या १०
द्यनेकनिषेधा **समयमयूखे** उक्ता । तथा जीवत्पितृकेणापि कार्यं ।
"मुंडनं पिंडदानं च प्रेतकर्म च सर्वश । न जीवत्पितृक कुर्याद्गुर्विणीपतिरेव चेति" दक्षीय-
निषेधस्य रागप्राप्तविषयत्वाद्विधिस्पृष्टेऽनवकाशात् । वस्तुतस्त्विदं **दक्षस्मृतौ** निबन्धे चानुपलभा-
न्निर्मूलं । **शंख**
" राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुत । केशाना वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥ १५
"केशाना रक्षणार्थं तु द्विगुणं व्रतमाचरेत् । द्विगुणे व्रत आचीर्णे दक्षिणा द्विगुणा भवेत् "॥
यत्तु ' विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनं । ऋते महापातकिनो गोहतुश्चावकीर्णिनं '॥
इति तत्र **विज्ञानेश्वरः** " महापातकादिव्यतिरिक्ते राजादीनां वपनं नास्त्येव । महापातकादौ
तु तेषां वपनानिच्छायां द्विगुणदक्षिणासहितं व्रतं द्वैगुण्यमिति " । अन्ये तु महा
पातकादौ नित्यं राजादेरपि वपनमेवान्यत्र तु वपनानिच्छायां व्रतद्वैगुण्यविधिरित्याहु । २०
इयं च वपनाद्येतिकर्तव्यता प्राजापत्यप्रभृतिष्वेव भवति न ततोऽल्पेषु । तथा
च **पैठीनसिः** " द्वादशाहे सपूर्णे वपनमिति " । वपनग्रहणं चेतिकर्तव्यतातरस्याप्युपलक्षणं ।
तथा च **याज्ञवल्क्य** (प्रा. ३२६)
"कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा। पवित्राणि जपेत्पिंडान् गायत्र्या चाऽभिमंत्रणमिति"॥
निवर्तमानवपनसाहचर्याच्च पंचगव्यादेरपि निवृत्ति । अत एव न्यूनपादव्रते वस्त्रदानमिति २५
**वैष्णवे** वस्त्रादिमात्रदानोक्तेरपठितमवगम्यते ।

## अथ पूर्वोक्तभस्मादिस्नानप्रकार ।

**लैंगे** " ईशानेन शिरोदेशे मुखं तत्पुरुषेण तु । हृदो देशमघोरेण गुह्यं वामेन सुव्रत ॥

१ इब—मनुष्ये । २ घब—यई—वामा ३ –ई—निषेधाश्चाह, यर—निषधय । ४ अदइयरनघ—व्रतेऽहनि इंल क्षयहनि । २ यरघ—च ।

"सत्येन पादौ सर्वांगं प्रणवेन तु शोधयेत्" । अत्रेशानादिपदैरीशानः सर्वविद्याना-मित्याद्यो मंत्रा उच्यंते । चतुर्थ्यंतानि नमोंतानीशानादिपदान्येव मंत्रा इत्यन्ये । अग्निरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ह वा इदं भस्मेति पंच मंत्रा ईशानादिमंत्रस्थान इत्यपरे । विष्णुः

५ "अग्रमग्रमिति स्मृत्वा मानस्तोकेन वा पुनः । गोमयैर्लेपयेत्प्राज्ञः सोदकैर्भानुदर्शितैः" ।

**योगयाज्ञवल्क्यः**

"त्रिधा कृत्वा मृदं तां तु गोमयं च विशेषतैः । अधमोत्तममध्यानामंगानां क्षालनं च तैः" । **कौर्मे** "गोमयस्य प्रमाणं तु येनांगं लेपयेत्तत" । इति ।

अथ मृत्तिकास्नानं । **जमदग्निः**

१० "अश्वक्रांतेति वै शुद्धां मृत्तिकामाहरेच्छनैः । नमोमित्रस्येत्यादित्याय दर्शयेत्समृदौ करौ" ॥ "गंधद्वारामिति जप्त्वा स्वान्यगान्यनुलेपयेत्" ॥ **शिवपुराणे**

"अश्वक्रांत इति स्मृत्वा मंत्रेणामंत्र्य मृत्तिकां । उद्धरेदुद्धृतासीति मंत्रेण सुसमाहितः ॥ "नमो मित्रस्येति ऋचा दर्शयित्वा च भानवे । आरुह्येति च गात्राणि समालभ्य द्विराचमेत्"॥ अनुपलेपने मन्त्रातरमाह **योगी** "आलभेत मृदंगानि इदं विष्णुरिति स्यृचा" । मृत्परिमाणं **कौर्मे**

१५ "मृत्तिका च समुद्दिष्टा त्वार्द्रामलकमात्रिकेति" । क्रम उक्तो **नारदेन**

"आयुष्कामः शिरोलेपं मृदा कुर्याद् द्विजः पुरा । श्रीकामः पादयोः शौचं मृदा पूर्वं समाचरेत्"

**पारस्करः**

"एकया तु शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि । मृद्भिश्च तिसृभिः कार्यं षड्भिः पादु तथैव च ॥ "कट्यस्त्यूरुजंघाश्च पादौ च तिसृभिस्ततः । तथा हस्तौ परिक्षाल्य द्विराचामेत्समाहितः"॥

२० **योगी**

"मृद्भिरद्भिश्च गात्राणि क्रमशस्त्ववनेजयेत् । शीर्षाद्यानाभिमर्माणि स्मरन्विष्णुमनामयं ॥ "कटिमस्त्यूरुजंघे च चरणौ च त्रिभिस्त्रिभिः । ततैव हस्तावप्येवं नमस्कृत्य जले रतः ॥ "यत्किंचेदमिति मंत्रेण नमस्येत्प्रयतांजलिः" ॥ अत्र विरुद्धानां मृत्संख्यादीनां यथाशास्त्रं व्यवस्थेति **हेमाद्रिः** । इति मृत्स्नानविधिः ।

२५ अनंतरं चतुर्थं वारिस्नानमुक्तं । तत्र मंत्रो **ब्रह्मांडपुराणे**

"आपो अस्मानिति त्वुक्त्वा भास्कराभिमुखः स्थितः । इदं विष्णुर्जपित्वा च प्रतिस्रोतो निमज्जति"॥ **महार्णवे** तु वैकल्पिकौ द्वौ मंत्रावुक्तौ । "इदमापः प्रवहतेति" ऋक् ।

---

+ चाभिमन्त्रयेदिति याज्ञवल्क्यः १ ह्य-तः । २ नलपयर्हर यथक-योगो । ३ ज-षा । ४ ह्याल-यिचक्षणः । ५ नयस्य-नया । ६ च-अभि ।

आपोहिष्ठेति ऋचो वेति । तत्र मूल मृग्य । अनतर पंचगव्यस्नानान्युक्तानि । तत्र तद्गृहणमत्रा मात्स्ये
"सावित्र्यादाय गोमूत्र गंधद्वारेति वै शकृत् । आप्यायस्वेति च क्षीर दधिक्राव्णेति वै दधि ॥
"तेजोऽसीति घृत तद्वद्देवस्य त्वेति चोदक । कुशमिश्र जपेद्विद्वान्पचगव्य भवेत्तत " ॥ इति ।
**पाराशर्ये** ( ११।३२ ) तु　　　　५
" तेजोऽसि शुक्रमित्याज्य देवस्य त्वा कुशोदक । पचगव्यमृचा पूत स्थापयेदग्निसन्निधाविति" ॥
द्वितीय श्लोक उक्त । देवस्य त्वेत्यनतरमभिषिचामीति वाक्यशेष पूरणीय इति **निबंधकृतः** । यद्यपि **मात्स्ये** देवप्रतिष्ठाया देवस्नानार्थपचगव्यग्रहणे एते मत्रा उक्ता **पराशरेण** च ब्रह्मकूर्चमकरणे तथाप्युभयत्रापि कुशोदकसहिताना पण्णा गोमूत्रादीना 'पचग[?]य भवेत्तत' इति 'पचगव्यमृचापूतमिति' च पचगव्यमिति परिभाषेति गम्यते ।　१०
तस्याश्च प्रकरणेन नियमाभावाद्यत्र पचगव्यविनियोगस्तत्रैतदेव मत्राद्यवगतव्य । अन्यथा गव्यमिति तद्धितस्य गव्यशृगतक्रादिसाधारण्येन तेनापि स्नान स्यात् । केचित्तु " मलाप कर्षण कार्य बाह्यशौचोपसिद्धय" इति बाह्यशरीरमलशोधनमात्रार्थत्वादमत्रकाण्येव तानीत्याहु ।
**जमदग्निः**
" हिरण्यशृग वरुणमित्यापोऽभिप्रपद्यते । सुमित्र्या इत्यप स्पृष्ट्वा दुर्मित्र्यास्तु बहि क्षिपेत् ॥　१५
" यदपाकूरमित्यापस्त्रिरालोड्य तु पाणिना " । प्रायश्चित्तवरणापर्यंत धर्मानाह **शख**
" प्रायश्चित्तमुपासीनो वाग्यतस्त्रिरुपस्पृशेत् । एकवासार्द्रवासा वा लघ्वाशी स्थडिलेशय ॥
" स्थानवीरासनी मौनी मौंजी दडकमडलु । भैक्षचर्याग्निकार्य च कूष्माडैर्जुहुयाद्धृत " ॥
उपस्पर्श स्नानमित्यपरार्के । दिवास्थिती रात्रौ चोपवेशन वीरासनमिति **विज्ञानेश्वर** ।
कुड्याद्यनाश्रयेणाहोरात्रमुपवेशनमिति **शूलपाणि** । **मनु** ( ११।२२४ ) "स्थानासनाभ्या　२०
विहरेदशक्तोऽध शयीत वा " । कूष्माडैर्यद्देवादेवहेडनमित्याद्यै । **वसिष्ठ**
" महाव्याहृतिभिर्होम सावित्र्या वाऽन्वह स्वय । कर्तव्य पावन सम्यक् सर्पिषा च तिलैस्तथा" ॥
द्रव्याणा व्याहृतिगायत्र्योश्च विकल्प इत्यपरार्के । **तत्रैव पुराणे**
" आपोहिष्ठेति सूक्त तु शुद्धवत्योऽघमर्षण । शवस्य स्वस्तिमत्यश्च पावमान्योऽघमर्षण " ॥
" सर्वत्रैव प्रयुनीत कृच्छ्रादिकमाचरन " । **वैशंपायनः**　　　　२५
" ऋषभ विरज चैव शुद्धवत्योऽघमर्षण । गायत्रीं वा जपेद्देवीं पवित्रा देवमातर ॥
" शतमष्टशत वाऽपि सहस्रमथवाऽपर " ॥ **स एव** " स्नात्वोपतिष्ठेदादित्य सौरीभिस्तु कृताजलि " । **गौतमः** ( २६।९ ) " रौरवयौधाजपे नित्य प्रयुंजीत " । रौरवयौधाजपे सामनी ।

---

१ नल-ब्रह्मकूर्चे । २ घ-प्रकरणे । ३ ब-ना । ४ क-स्थित । ५ बंधकई-स्थित, न-रो
६ घलइबई-सौरिभि ।

**षट्त्रिंशन्मते**

" जपहोमादि यत्किंचित्कृच्छ्रोक्तं संभवेन्न चेत्। सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन वा"॥

हारीतः " सूर्याय देवताभ्यो वै निवेद्य व्रतमाचरेदिति "। निवेदनमग्रे व्रतपते- व्रतमित्यादिमंत्रेणेत्यपरार्के। **पराशरः**

५ " प्रायश्चित्तेषु सर्वेषु कुर्याद्ब्राह्मणभोजनं। शक्त्या वित्तानुसारेण प्रायश्चित्तानुरूपतः॥

"आ सहस्राद्वा शताद्वा दशांतमथ वा जपेत्। ॐकाराद्यं तथान्यद्वा गायत्रीमथ वाऽयुतं"॥

अशक्तौ प्रायश्चित्तमन्यद्वाराऽपि कार्यमिति प्रायश्चित्तविवेके ब्राह्मे " रोगी वृद्धस्तु पौगंडः कुर्यादन्यैर्व्रतं सदेति "। कुर्यात् कारयेत्। **पराशरः** ( ६।५० )

" व्याधिव्यसनिनि श्रांते दुर्भिक्षे डामरे तथा। उपवासो व्रतं होमो द्विजसंपादितानि वै "॥

१० शुद्धिकराणीति शेषः। डामरं परचक्रादि। व्रतांते कर्तव्यमाह **पराशरः** ( ११।३ )

" पंचगव्यं पिबेच्छूद्रो ब्रह्मकूर्चं पिबेद्द्विजः। एकद्वित्रिचतुर्गावो दद्याद्विप्राद्यनुक्रमात् "॥

ब्रह्मकूर्चप्रकारो वक्ष्यते। शिष्टास्तु पूर्वमेव ब्रह्मकूर्चं कुर्वंति। **यमः** ( १२ )

" प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते। शुद्धस्तदहरेवाऽसाविह लोके परत्र चेति "॥

**अंगिरा अपि**

१५ "यो[1] यदर्थं चरेद्धर्ममप्राप्य म्रियते व्रतं। स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत् "॥

**छागलेयः**

" पूर्वं व्रतं गृहीत्वा तु नाचरेत्काममोहितः। जीवन्भवति चंडालो मृतः श्वा चाभिजायते" ॥

**वायवीये**

" लोभान्मोहात्प्रमादाद्वा व्रतभंगो भवेद्यदि। उपवासत्रयं कुर्यात् कुर्याद्वा केशमुंडनं ॥

२० " प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् "। वाशब्दः समुच्चये ॥

अथ **साधारणप्रयोगः**। तत्र प्रायश्चित्तं तावत्स्त्रीरोगिवृद्धबालादिष्वर्द्धं। पंच- वर्षात्पूर्वं पादः। षोडशवर्षाधिकब्रह्मचारिणि द्विगुणं। यतौ चतुर्गुणं। क्षत्रविट्शूद्राणां पादपादह्रानिः। ब्रह्मवधे चतुर्विधसाहसे च तेषां द्वित्रिचतुर्गुणं। सर्वपापेष्वनु- ग्राहकप्रयोजकानुमंतृनिमित्तानां क्रमात्पादपादह्रानिः। निमित्तिनः पादः। अनु-

२५ लोमानां मातृतुल्यं प्रतिलोमानां शूद्रतुल्यं। स्त्रीशूद्रयोरंगप्रधानजपहोममंत्ररहितं प्रत्याम्नायाश्च प्राजापत्ये धेनुरेका देया। तन्मूल्यं वा। तच्च चत्वारिंशन्माषास्तदर्द्धं वा हेमरूप्यं चैता- वत् त्रिपुराणं वा रूप्यं। द्वात्रिंशद्वुमः पुराणः। द्वादशविप्रभोजनं। अयुतं गायत्रीजपः। गायत्र्या सहस्रतिलाहुतयः। संहितापारायणं। पद्भ्यां तीर्थसंनिधि योजनगमनं। शुष्कक्लेशाश्च

---

१ घ–स्वगोम। २ ई–यदर्थं च; यरघ–यो यमर्थं। ३ ई–द्वादर्थं। ४ घ–भाऊ। ५ घ–पादहानिः।
६ यरघ–पादे।

द्वादशस्नानानि प्राणायामशतद्वयं पावकेष्टि पावनी वेति । एकस्मिन् चान्द्रायणे प्राजापत्यप्रत्याम्नायास्त्रिगुणा । अतिकृच्छ्रे द्विगुणा । 'त्रिंशत्प्राजापत्यसममब्दमि'त्यादि । प्रायश्चित्तसदाचाराद्विक्काया तिथौ दिनान्तेऽपराह्णेऽपि वा द्वौ त्रीश्चतुर पच सप्त दश वा विप्रानाहिताग्नीनन्यान्वा एकमेवाध्यात्मविद पर्षत्त्वेनापवेश्य तेभ्यो गोवपौ तन्निष्क्रय वा दत्वा साष्टाग भूमौ प्रदक्षिणीकृत्य

" सर्वे धर्मविवेक्तारो गोप्तार सकला द्विजा । मम देहस्य संशुद्धिं कुर्वंतु द्विजसत्तमा ॥
" मया कृत महाघोर ज्ञातमज्ञातकिल्बिष । प्रसाद क्रियता मह्य शुभानुज्ञा प्रयच्छथ ॥
" पूज्यै कृत पवित्रोऽह भवेय द्विजसत्तमैरिति " मन्त्राभ्या तान्प्रार्थयेदाचारात् । तत सभ्यास्तच्छक्तिं विचार्य समस्या तत्तत्प्रायश्चित्तविधिवाक्यमुक्त्वा शतघ्नी बालवृद्धरोग्यादिष्वनुग्रह , कृत्वा सभ्यान्यानुवादकविप्रद्वारामुककर्मजन्यपापनाशार्थमिद प्रायश्चित्तमशक्तावमुकप्रत्याम्नायेन त्वया कार्यं तेन त्व शुद्धो भविष्यसीति । सर्वप्रायश्चित्ते तु तव जन्मप्रभृति अद्य यावत् ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकातिपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपापाना मध्ये संभाविताना नाशार्थं षडब्दमशक्तौ त्र्यब्द सार्द्धाब्द वा प्रायश्चित्त त्व कुर्विति । अथ चोपदेशो व्रतकर्त्रा पुस्तकपूजने सभ्येभ्यश्च तदुद्देशेन गोदाने च कृते वारत्रय कार्य इति सप्रदाय ।

तत कर्ता मासपक्षादि स्मृत्वा ' मम जन्मप्रभृत्यद्य यावदित्यादि प्रायश्चित्तमित्यत पूर्वोक्तमुक्त्वा अह चरिष्ये ' इति सकल्प्य

"यानि कानि च पापानि ब्रह्महत्यासमानि च । केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपाम्यहमिति" मन्त्रमुक्त्वा कक्षोपस्थशिखावर्ज्ज क्रमेण श्मश्रुपक्षकेशानुदक्संस्थान्वापयेत् । यतिविधवादीना सशिखं वपन । ब्रह्महत्यादिष्वपि सशिख सर्वांगलोम्ना च । सधवाना द्व्यङ्गुलकेशाग्रछेदन । राजतत्पुत्रबहुश्रुतविप्राणामिच्छया वपनाभाव । तदा च द्विगुण व्रत । दक्षिणा च द्विगुणा । इत्थ वापयित्वाऽऽयुर्बलमित्यादिना च दतधावन कृत्वा दश स्नानानि कुर्यात् । तत्र भस्मस्नानं । 'ईशान सर्वविद्यानामिति' शिरसि । 'तत्पुरुषायेति' मुखे । 'अघोरेभ्योऽथ घोरेभ्य ' इति हृदि । ' वामदेवायेति ' गुह्ये । 'सद्यो जातमिति' पादयो । प्रणवेन सर्वांगे । यद्वा ' ईशानाय नम ' शिरसि । ' तत्पुरुषायेति नमो ' मुखे । ' अघोराय नमो ' हृदि । 'वामदेवाय नमो' गुह्ये । 'सद्यो जाताय नम ' पादयो । प्रणवेन सर्वांगे । 'अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्व ह वा इद भस्मे'ति मन्त्रै र्वा मानस्तोकादिभि । ततो गोमयमादाय त्रिधा कृत्वा सूर्याय प्रदर्श्य 'अग्रमग्र चरतीनामोषधीना वनेवने । तासामृषभपत्नीना पवित्र कायशोधन । तन्मे रोगाश्च शोकाश्च नुद गोमय सर्वदेति'

मन्त्रेणैकेन नाभेरध परेण नाभेरुर्ध्वमास्यमन्येन च शिर क्षालयेत् । मानस्तोकेति वा मन्त्र ।
ततोऽश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुधरे । मृत्तिके हर मे पाप यन्मया दुष्कृत कृतमिति[1]
मृत्तिकामभिमन्त्र्य "उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके ब्रह्मदत्तासि काश्यपेनाभि
मन्त्रिता। मृत्तिके हर तत्सर्व यन्मया दुष्कृत कृतम् । मृत्तिके देहि मे पुष्टिं त्वयि सर्व प्रतिष्ठितम् ।
५ त्वया हतेन पापेन जीवामि शरद शतमिति "ब्रह्माद्येयमन्त्रेण खनित्वा ' नमो
मित्रस्येति ' सूर्यं प्रदर्श्य त्रिधा कृत्वैकस्माद्भागात्पट्वत्तस्तो वा मृद्र । पादयो जघोरुकटि
वस्तिषु प्रत्येक चतस्र । गुह्ये षट् । उदरकुक्षिपृष्ठवक्षोहस्तकण्ठेषु द्वे द्वे । शिरस्येका ।
मृत्परिमाणमार्द्रामलकमात्र । तत ' आपो अस्मान्मातर ' । 'इद विष्णुरि'त्येताभ्या ' देवस्य
त्वे'त्यनेन वा स्नात्वा गायत्र्या गोमूत्रेण । ' गधद्वारेति ' गोमयेन । ' आप्यायस्वेति '
१० दुग्धेन । ' दधिक्राव्ण ' इति दध्ना । 'तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि । प्रिय
देवानामनाधृष्य देवयजनमि'त्याज्येन । ' देवस्यत्वे'ति कुशोदकेन स्नायात् । यद्वैतानि
दशापि स्नानान्यमन्त्रकाण्येव कार्याणि । ततो " हिरण्यशृग वरुण प्रपद्ये तीर्थं मे
देहि याचित । यन्मया भुक्तमसाधूना पापेभ्यश्च प्रतिग्रह । यन्मया मनसा
वाचा कर्मणा वा दुष्कृत कृत । तन्न इन्द्रो वरुणो बृहस्पति सविता च पुनतु
१५ पुन पुन " इत्येताभ्या तीर्थं प्रार्थ्य । ' ॐ नमो नारायणाय ' इत्यष्टाक्षरेण
तीर्थं प्रकल्प्य ' ॐ भूर्भुव स्वरिति ' त्रिराचम्य मक्कुतिमज्य ' या प्रवत ' इत्येतया
व्याहृतिभिर्गायत्र्या भस्मभिम यापामार्गदूर्वाकुशै ' काडादिति ' द्वाभ्या ' या शतेन
चे'ति द्वाभ्या प्रणव याहृतिगायत्री ' आपो हिष्ठाभि ' र्मार्जयित्वाऽन्तर्जले ' ऋत चेति '
तृच जप्त्वा निर्निमज्य देवर्षिपितृन्सतर्प्य शुष्क वासो धृत्वा श्यधिकैविप्रैरावाहनाग्नौकरण
२० स्वधावाचनरहितपार्वणविधिना श्राद्ध कुर्यात् । तत्र सर्वेष्वपि विप्रेषु विष्णोरेवावाहन । तत
एका गा च हिरण्य च दत्वा व्याहृतिभि शालाग्नौ अष्टाविंशत्यादिसख्ययाऽऽज्यक्रमादग्नि
वायुसूर्यप्रजापतिदेवत्य हुत्वा ब्रह्मकूर्चहोममपि कुर्याद्दाचारात् । तत्र ताम्रे पालाशे पात्रे
वा पात्रेऽरण्याया कृष्णाया वा गोमूत्र पलमितमष्टमापमित वा गाय याऽऽदाय श्वेताया
अगुष्ठार्द्धमित षोडशमाषमित वा गोमय 'गधद्वारामिति ' ताम्राया हेमवर्णाया वा पय
२५ सप्तपल द्वादशमाषमित गोमयाष्टगुण गोमूत्र त्रिगुण वाऽऽप्यायस्वेति ' रक्ताया कृष्णाया
वा दधि त्रिपल दशमाषमित गोमयात्पचगुणमष्टगुण गोमूत्राद्द्विगुण वा ' दधिक्राव्ण ' इति
कपिलाया नीलाया वा घृतमेकपलमष्टमाषमित गोमयाच्चतुर्गुण वा ' तेजोऽसि शुक्रमिति '
कुशोदक च पलमितं चतुर्माषमित वा ' देवस्य त्वेति ' गृह्णीयात् । गोमूत्रादि कापिल वा
ग्राह्य । अलाभे गव्यमात्र । एतन्मन्त्राते गृह्णामीति वाक्यशेष । तत ' आपो हि ष्ठेति '

[1] ई–मो दुग्धन । २–' यन ' इत्यपि पाठ श्रूयत ।

हस्तेनालोड्य ' मा न स्तोक'इति यज्ञियकाष्ठेन निर्मथ्य सप्तावरै कुशै त्रिभि पलाशपत्रैर्वा जुहुयात् । मन्त्रास्तु । *" ॐ इरावती धेनुमतीहि भूत "। पृथिव्या इद न ममेति त्याग । ' इद विष्णु ' । विष्णवे इद । ' मानस्तोके ' । रुद्राय । ' शन्नोदेवी ' अभ्य सोमाय स्वाहा । इद्रवते स्वाहा । गायत्र्या । सवित्रे । ' प्रजापते न त्वदेतान्यन्यो ' प्रजापतये । ॐ स्वाहा । प्रजापतयेद० । अय च ब्रह्मकूर्चहोमोऽन्ते प्रमाणवान् । ५ तत स्विष्टकृदादि होमशेष समाप्य तारकोद्ये होमावशिष्ट पञ्चगव्य प्रणवेनालोड्य प्रणवेन निर्मथ्य प्रणवेन पीत्वा सम्योपदिष्ट सकल्पित प्रायश्चित्त साक्षाद्यथासंभव प्रत्याम्नायेन वा कृत्वा पूर्ववद्व्याहृतिभिराज्यहोम ब्रह्मकूर्चहोम विष्णुश्राद्ध च कृत्वा गोहिरण्यादिदक्षिणा च दत्वा शिरसा तृणभारमानीय गोभ्यो दत्वा ताभिर्भक्षिते शुद्ध्येत् ।

॥ इति श्रीमीमासकशंकरभट्टात्मजनीलकंठकृते भगवंतभास्करे १० प्रायश्चित्तमयूखे ×साधारणः प्रायश्चित्तप्रयोगः ॥

**अथ कृच्छ्रादिस्वरूपं । याज्ञवल्क्यः** ( प्रा ३१९–३२० )

" एकभक्तेन नक्तेन तथैवाऽयाचितेन वा । उपवासेन चैकेन लघुकृच्छ्र उदाहृत ॥

' यथाक्थचित्रिगुण प्राजापत्योऽयमुच्यते । एष एवातिकृच्छ्र स्यात्पाणिपूरान्नभोजन" ॥ इति । लघुकृच्छ्रएव शिशुकृच्छ्र इति नामान्तर । अनुलोम प्रतिलोमो दण्डकलित- १५ वदावृत्त स्वस्थानविवृद्धो वा । एताश्चत्वारोऽपि पक्षाः स्मृत्यन्तरसिद्धान्यथाकथचित्पदेनैव सजग्राह योगी । ग्राससख्यामाहापस्तबः

" साय द्वाविंशतिर्ग्रासा प्रात षड्विंशति स्मृता । चतुर्विंशतिरायाच्या पर निरशन स्मृत ॥

" कुक्कुटाण्डप्रमाणा स्युर्यथा वाऽस्य विशेन्मुख " ॥ पाराशर्ये तु

" साय [१] द्वादश ग्रासा प्रात पचदश स्मृता " इति पूर्वार्द्धं । चतुर्विंशतिमते तु २० "प्रातस्तु द्वादश ग्रासा साय पचदशैव तु । आयाचिते तु द्वावष्टौ पर वै मारुताशन" ॥ इति । आसा च सख्याना शक्त्या विकल्प । अतिकृच्छ्रे उपवासभिन्नचर्दिने भोजनेषु पाणिपूरान्नविधि । पाणिपूरमेकग्रासमित । " एकैक ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् । त्र्यह चोपवसेदत्यमतिकृच्छ्र चरन् द्विज " इति मनूक्तेः ( ११।२१३ ) ।

सान्त प्राजापत्यमाह गौतमः ( २६।१–१६ ) " हविष्यान्प्रातराशान् भुक्त्वा २५ तिस्रो रात्रीर्नाश्नीयादथापर त्र्यह नक्त भुञ्जीताथापर त्र्यहं न कचन याचेताथापर त्र्यह मुपवसेत्तिष्ठेदहनि रात्रावासीत क्षिप्रकाम सत्य वदेदनार्यैर्न सभाषेत रौरवयौधाजपे नित्य

१ घर्ई—माते । * ॐ इरावती धेनुमती हि भूत सूयवसिनामनवेदशस्या । व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखै । इति ख-पाठ । २ पादकृच्छ प्रकीर्तित इति मुद्रितयाज्ञवल्कीये पाठ । × [illegible] स्वसाधारण

प्रयुंजीतानुसवनमुदकोपस्पर्शनमापो हि ष्ठेति ' तिसृभिः पवित्रवतीभिर्मार्जयीत ' हिरण्यवर्णाः शुचयः पावका ' इत्यष्टाभिरथोदकतर्पणं न मोहमाय मोहमाय मंहमाय मंहमाय धुन्वते तापसाय पुनर्वसवे नमो मौंज्यायौर्व्याय सुविविदाय वसुविंदे सर्वविदाय नमः । परावसुविंदे सर्वविदाय नमः पराय सुपाराय पारदाय पारयिष्णवे नमो रुद्राय
५ पशुपतये महते देवाय त्र्यंबकायैकचरायाधिपतये हरये शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमः । सूर्यायादित्याय नमो नीलग्रीवाय शितिकंठाय नमः । कृष्णाय पिंगलाय नमो ज्येष्ठाय श्रेष्ठाय वृद्धायेंद्राय हरिकेशायोर्ध्वरेतसे नमः । सत्याय पावकाय पावकवर्णाय कामाय कामरूपिणे नमो दीप्ताय दीप्तरूपिणे नमः सौम्याय पुरुषाय महापुरुषाय मध्यमपुरुषाय ब्रह्मचारिणे नमश्चन्द्रललाटाय कृत्तिवाससे नम इति । एत
१० एवादित्योपस्थान एता एवाज्याहुतयो द्वादशरात्रस्यांते चरुं श्रपयित्वैताभ्यो जुहुयादग्नये स्वाहा सोमाय स्वाहाग्नीषोमाभ्यामिंद्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतये स्विष्टकृत इत्यंते ब्राह्मणभोजनमेतेनातिकृच्छ्रो व्याख्यात " इति । नमोऽहमाये-त्यादयस्त्रयोदशमंत्रा नमः पूर्वानमौताश्चेति हरदत्तः । कौथुमब्राह्मणे तु तथैव पाठः ।

**अथ कृच्छ्रातिकृच्छ्रः । याज्ञवल्क्यः ( प्रा. ३२१ )**

१५ " कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिं " । इति । पयो जलं । " चरेत्कृच्छ्राति-कृच्छ्रं तु पिबेत्तोयं तु शीतलमिति " ब्रह्मांडपुराणात् ।

अथ पराकः । स एव (प्रा. ३२१ ) "द्वादशाहोपवासेन पराकः परिकीर्तित " इति ।

**मासोपवासकृच्छ्रमाह जाबालः** 'अनश्नन्मासमेकं तु महापातकनाशनमिति' ।

यावककृच्छ्रमाह शंखः

२० " गोपुरीषाद्यवानश्नन्मासमेकं समाहितः । व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये " ॥

तप्तकृच्छ्रमाह मनुः ( ११।२१४ )

" तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः" ॥

**पराशरः**

" षट्पलं तु पिबेदंभस्त्रिपलं तु पयः पिबेत् । पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रो विधीयते "॥

२५ तप्तकृच्छ्रमुक्त्वा शंखलिखितौ " एष एव शीतैः" शीतकृच्छ्र ॥ इति ।

ब्रह्मकूर्चमाह जाबालः

" अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पंचगव्यं पिबेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः" ॥

**प्रजापतिः**

१ अतः परं ख पुस्तकं प्राप्यते ।

"पालाशं पद्मपत्रं वा ताम्रं वाऽथ हिरण्मयं। गृहीत्वाऽऽसादयित्वा तु तथा कर्म समाचरेत्" ॥

पराशरः ( ११।२९—३० )

" गोमूत्रं कृष्णवर्णाया श्वेतायाश्चैव गोमयं । पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि " ॥

" कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वेति " ॥ स एव ( ११।३०—३१ )

" मूत्रमेकपलं दद्यादङ्गुष्ठार्द्धं तु गोमयं । क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ॥ ५

" घृतमेकपलं दद्यात्पलमेकं कुशोदकम् " । गवां वर्णांतरस्य पंचगव्यपरिमाणांतरस्य च बोधवाक्यानि ग्रंथांतरे द्रष्टव्यानि । तदर्थस्तु प्रयोगेऽस्माभिः संगृहीत ।पराशरः(११।३३)

" आपो हि ष्ठेति चालोड्य मानस्तोकेति मंथयेत् " ॥ स एव ( ११।३४ )

" सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः । तैरुद्धृत्य तु होतव्यं पंचगव्यं यथाविधीति"॥

प्रजापतिस्तु १०

" स्थापयित्वाऽथ दर्भेषु पालाशैः पत्रकैरथ । तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमं " ॥

पराशरः ( ११।३५—३६ )

"इरावती इदं विष्णुर्मानस्तोके च शंवती । एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः "।प्रजापतिः

" अग्नये चैव सोमाय सावित्र्या च तथैव च । प्रणवेन तथा हुत्वा स्विष्टकृच्च तथैव च"॥

मरीचिः " अग्नयेस्वाहा । सोमाय स्वाहा । इरावते । इदं विष्णु । मानस्तोके । १५ गायत्र्या । प्रजापते न त्वदेतानी त्याज्याहुतीरग्नौ जुहुयात् " ॥ पराशरः ( ११।३९ )

"आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु । उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु"॥ मरीचिः

" पालाशेन च पत्रेण बिल्वपत्रेण वा पिबेत् ।तृतीयं ताम्रपात्रं वा ब्रह्मपात्राणि तानि वै"॥

वृद्धपराशरः

" यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके । ब्रह्मकूर्चो दहेत्सर्वं शुष्कमग्निरिवेंधनमिति " ॥ २०

पानदिने चोपवासः । " ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेंधनमिति " ( ६।२९ ) पराशरोक्तेः

अथ सांतपनं । शंखः ( १८।८ )

" गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं । एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतं ॥

" एतदेव त्र्यहाभ्यस्तं यतिसांतपनं स्मृतम् " ॥ महासांतपनमाह याज्ञवल्क्यः ( प्रा. ३१६ )

" पृथक् सांतपनद्रव्यैः षडहः सोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासांतपनं स्मृतं "॥ यमः २५

" एतान्येव च पेयानि एकैकं च त्र्यहं त्र्यहं । अतिसांतपनं नाम श्वपाकमपि शोधयेत् " ॥

द्वादशाहोऽयं ।

" त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् । त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः "॥

पंचदशाहोऽयं ।

---

१ घर-पय । २ धय-शुभत्विष । ३ अचखघयरईक्षा-मानव ४ घयर-न स्मृत । ५ क्ष-दशाहोऽय

जाबालः

" एकैकमेतदेव हि निरात्रमुपयोजयेत् । त्र्यहं चोपवसेदन्त्यं महासांतपनं विदुरिति " ॥
एकविंशतिरात्रोऽयं । अथ तुलापुरुषकृच्छ्रः । शंखः ( १८।९ )
" पिण्याकाचामतक्राम्बुसक्तूना प्रतिवासरं । उपवासांतराभ्यासात्तुलापुरुष उच्यते " ॥

५ अथ चांद्रायणं । यमः

" वर्द्धयेत्पिण्डमेकैकं शुक्ले कृष्णे च ह्रासयेत् । एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्तितं ॥
" एकैकं ह्रासयेत्पिंडं कृष्णे शुक्ले च वर्द्धयेत् । एतत्पिपीलिकामध्यं चांद्रायणमुदाहृतं ॥
" त्रींस्त्रीन्पिंडान्समश्नीयान्नियतात्मा दृढव्रतः । हविष्यान्नस्य वै मासमृषिचांद्रायणं स्मृतम् ॥
" चतुरः प्रातरश्नीयाच्चतुरः सायमेव च । पिंडानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम् ॥
१० " पिंडानष्टौ समश्नीयान्मासं मध्यदिने रवौ । यतिचान्द्रायणं ह्येतत्सर्वकल्मषनाशनं " ॥

यतिचांद्रायणमिति सञ्ज्ञामात्रं । तेन न यतिमात्रस्यैवात्राधिकारः किंतु सर्वेषां ।
एवं शिशुचान्द्रायणेऽपि यवपिपीलिकामध्ययोस्तिथिह्रासे वृद्धौ वा ग्रासानामपि ह्रासवृद्धी ।
तथा च विष्णुः " ग्रासानास्याविकारमश्नीयात्ताश्चन्द्रकलाभिवृद्धौ क्रमेण वर्द्धयेद्धानौ च
ह्रासयेदमावास्यायां च नाश्नीयादिति " । एतेन यत्कल्पतरुकृच्छूलपाणी आहतुः "कृष्ण-
१५ प्रतिपदि पंचदश ग्रासाः । ततः एकैकहानावमावास्यामेको ग्रासः । शुक्लप्रतिपदादिषु द्व्यादि
वृद्धिरिति"[१] तदपास्तं ।' अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिरिति ' पराशरोक्तेश्च ।
सामान्यचान्द्रायणमाह स एव " यथाकथंचित्पिंडानां तिस्रोऽशीतीरश्नीयात्स
सामान्यचान्द्रायणं " इति । प्रतिदिनं सख्यानियमानादरेण मासेन चत्वारिंशदुत्तर
शतद्वयं ग्रासानश्नीयादित्यर्थः । पिपीलिकायवमध्यमिन्नचान्द्रायणेषु दिनांतरेऽप्यारंभो न
२० प्रतिषध्येत । ग्रासपरिमाणमाह याज्ञवल्क्यः ( प्रा ३२४ )
" तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसंमितान् " । शिखी मयूर ।
चांद्रायणप्रकरणे पराशरस्तु ( १०।३ ) ' कुक्कुटाण्डप्रमाणं तु ग्रासं वै परिकल्पयेत् " ॥
शंखस्तु " आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः " इति ।
एतेषां च परिमाणानां शक्त्या विकल्पः । एकादश्यादौ नित्यप्राप्त उपवासस्तावच्चांद्रायण
२५ विधिना बाध्यते । एतस्य " धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकतामिति "
काम्यत्वाल्लशुनभक्षणादिनिमित्ते विहितत्वेन नैमित्तिकत्वाच्च । काम्यस्त्वेकादश्याद्युपवासोऽन्य
द्वारा कारणीयः । प्रतिनिधिना कृतेऽपि फलप्राप्तेः कात्यायनादिभिरुक्तत्वात् । वचनानि

---

[१] ' पादद्वयं तथा त्यक्त्वा द्वाभ्यां परिवासनात् ' इति मुद्रितपुस्तके पाठः । २ अयं श्लोकः यमेऽपि दृश्यते ( यम १० ) ३ यत्न-आरम्भो ।

त्वस्मत्कृते समयमयूखे द्रष्टव्यानि । अथ चैकादश्याद्युपवासश्चाथ सामान्यश्चान्द्रायण भिन्नेष्वेव । तत्र प्रतिदिनग्रासग्रहणनियमाभावात् । गौतम'(२७।१–१२)"अथातश्चान्द्रायण। तस्योक्तो विधि कृच्छ्रे । वपन व्रत चरेच्छ्वोभूता पौर्णमासीमुपवसेदाप्यायस्व स ते पयासि नवो नव इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थान चन्द्रमसो 'यद्देवा देवहेडनमिति' चतसृभिराज्य जुहुया'द्देवकृतस्येति'चान्ते समिद्भि । ॐभू । ॐभुव । स्व । तप । सत्य । ५ यश । श्री । ऊर्क् । इट् । ओज । तेज । पुरुष । धर्म । शिव । इत्येतैर्ग्रासानुमन्त्रण। मनसा । नम स्वाहेति प्रमाणमास्याविकारेण चरुभैक्षसक्तुकणयावकशाकपयोदधिघृत- मूलफलोदकान्युत्तरोत्तरप्रशस्तानि । पौर्णमास्या पचदश ग्रासान् भुक्त्वा एकैकापचयेन पूर्वपक्षमिति" । बौधायनः (३।८।१–३)" अथातश्चान्द्रायणकल्प व्याख्यास्याम । शुक्ल- चतुर्दशीमुपवसेत् कृष्णचतुर्दशीं वा केशश्मश्रुनखलोमानि वापयित्वा श्मश्रूण्येव वेत्यादि " ॥ १०

यम

" आयस तैजस पात्र चक्रोत्पन्न विवर्जयेत् । असुराणा हि तत्पात्र देवपात्रमचक्रक " ॥ चक्रोत्पन्न घटशरावादि । स एव ' अगुल्यग्रन्थित ग्रास सावित्र्या चाभि मन्त्रयेत् " । अत्र ग्रासैरेव प्राणाग्निहोत्रमाह बौधायनः (३।८।१०) " अश्नीयात्प्राणायेति प्रथमं । अपानायेति द्वितीयम् । व्यानायेति तृतीयम् । उदानायेति चतुर्थं । समानायेति १५ पचम । यदा चत्वारस्तदा द्वाभ्या पूर्व । यदा त्रयस्तदा द्वाभ्या पूर्वा । ग्रासद्वयपक्षे प्रथम माद्यैस्त्रिभिरत्य द्वाभ्यामेकपक्षे सर्वैरेकमित्यर्थ " ।

अथ प्रयोगः । चतुर्दश्या कृतनित्यक्रिय पूर्वाह्णे प्राणानायम्य मासपक्षाद्यु ल्लिख्यामुकपापक्षयकाम श्रीकामो देवताप्रीतिकामो रसायनादिसिद्धिकामो वाऽमुकचान्द्रायण करिष्य इति सकल्प्य अग्ने व्रतपते व्रत चरिष्यामीत्यग्निमन्त्रेव्रतमास्थाय निवेद्य २० केशश्मश्रुलोमनखानि श्मश्रूण्येव वा वापयित्वा तद्दिन उपोष्य परदिनेऽमा चेत्तत्राप्युपोष्य पौर्णिमा चेत्पचदश ग्रासान्भुञ्जीत । तत अमोत्तरपक्षे उपचय पौर्णिमोत्तरपक्षेऽपचयो ग्रासाना। प्रतिदिनमुदिते चन्द्रे "आप्यायस्व सोम तर्पयामि । स ते पयासि चन्द्र तर्पयामि । नवो नवो चन्द्रमस तर्पयामीति " तर्पयित्वाऽऽज्येनैतैरेव मन्त्रैर्लौकिकेऽग्नौ हुत्वैतैरे वपात्रस्थ हविरनुमन्त्र्यैतैरेव चन्द्रमुपस्थाय 'यद्देवा देवहेडनमिति' चतसृभिश्च प्रत्यृचमाज्य जुहुयात् । सर्वत्राग्नये न ममेति २५ त्याग । ततो 'देवकृतस्येति' त्रिभि समित्त्रयं हुत्वा। 'ॐ भू । ॐ भुव । स्व । तप । सत्य। यश । श्री । ऊर्क् । इट् । ओज । तेज । पुरुष । धर्म । शिव '। इत्येतै पचदशभि रेकैकक्रमेण पात्रस्थ ग्रासमनुमन्त्र्य मनसा नम स्वाहेत्युक्त्वा सर्वाननुमन्त्र्यैकैकमगुल्यग्रैर्गृहीत्वा साविञ्याऽनुमन्त्र्य भक्षयेत् । तत्र प्रथमदिन एकग्रासभक्षणे प्राणाय स्वाहेत्यान्य पचापि

१ वई–क ।

मन्त्रा । द्व्यार्ग्रासयोराद्येस्त्रिभिस्त्रिभिर्मन्त्रैरेक । द्वाभ्यामपर । त्रिषु ग्रासेषु द्वाभ्यां द्वाभ्यां द्वौ एकेनान्त्य । चतुर्षु द्वाभ्यां पूर्वे एकैकेनान्यान् पञ्चम्योऽप्येते ग्रासास्तूष्णीमेव भक्षणीया । समाप्तौ यवरान् विप्रान् भोजयित्वा गा दक्षिणा दद्यात् । असमाप्तिप्रत्यह त्रिषवणस्नान सौरमन्त्रै कृताञ्जलिरादित्योपस्थान गायत्र्या व्याहृतिभि कूष्माण्डैर्वाऽऽज्यहोम । दिवा स्थिति । रात्रावुपवेशन । अशक्तौ शयन । यथाशक्ति । 'आपो हि ष्ठेति' सूक्त । 'एतोन्विन्द्र' । ऋत चेति तृच ' शम्न इन्द्राग्नी' 'स्वस्तिनो मिमीता' । ' पुन तु मा देवजना ' । ऋषभ विरजं रौरवयौधाजपे सामनी च पठेत् । एतेषामसमर्थे गायत्रीं व्याहृती प्रणव वा जपेत् । एतच्च विप्रभोजनदक्षिणादानादिजपात सर्वेष्वपि प्राजापत्यादिव्रतेषु तुल्य ।

॥ इति चान्द्रायणव्रतप्रयोग ॥

१० अथ सोमायन । मार्कण्डेयः

" गोक्षीर सप्तरात्र तु पिबेत्स्तनचतुष्टयात् । स्तनत्रयात्सप्तरात्र सप्तरात्र स्तनद्वयात् ॥

" स्तनेनैकेन षड्रात्र त्रिरात्र वायुभुग्भवेत् " । एतत्त्रिंशद्दिनसाध्य । चतुर्विंशतिदिनसाध्यमाह । चतुर्थीप्रभृति चतुस्तनेन त्रिरात्र । त्रिस्तनेन त्रिरात्र । द्विस्तनेन त्रिरात्र । एकस्तनेन प्रभृति पुनश्चतु स्तनात । 'या ते सोम चतुर्थी तनू तस्यै स्वाहा' । एव पञ्चमीषष्ठीत्येव

१५ यथार्थास्तिविहोमा । एकमाद्यो ह्येनोभ्य पूतश्चद्रमस समानता सामान्यता समानलोकता सायुज्य गच्छति । समाप्ते ब्राह्मणतर्पण दक्षिणादान च । चतुर्थी कृष्णा । समानता तुल्यत्व । सामान्यताऽपरचन्द्रत्व सायुज्य चन्द्रभेद । सर्वेषां कृच्छ्राणां फलार्थत्वमप्याह व्यासः

" श्रीकाम पुष्टिकामश्च स्वर्गकामस्तथैव च । देवताराधनपरस्तथा कृच्छ्र समाचरेत् ॥

" रसायनानि मन्त्राश्च तथा चैवौषधानि च । तस्य सर्वाणि सिध्यन्ति यो नर कृच्छ्रकृद्भवेत् ॥

२० "वैदिकानि च सर्वाणि यानि काम्यानि कानिचित् । सिध्यन्ति सर्वेन्त्रा तानि कृच्छ्रकर्तुर्न सशय "॥इति अथप्राजापत्यादिप्रत्याम्नायाः । तत्र तावच्चान्द्रायणद्वादशाब्दादिमतनिषेधेष्वपि पापेषु प्राजापत्यकल्पनामाहतुर्यमोशनसौ

" यत्रोक्त यत्र वा नोक्तमिह पातकनाशन । प्राजापत्येन कृच्छ्रेण शोधयेन्नात्र सशय "॥ प्राजापत्यश्च मतातरानुरोधेनावृतो वा । प्राजापत्यप्रत्याम्नायश्चतुर्विंशतिमते

२५ " कृच्छ्रो देव्ययुत चैव प्राणायामशतद्वयम् । तिलहोमसहस्र तु वेदपारायण तथा ॥

" विप्रा द्वादश वा भोज्या पावकेष्टिस्तथैव च । अन्या वा पावमानेष्टि समान्याहुर्मनीषिण "॥ अपरार्के

१ यईरनलघ–एकमाद्या । २ घ–गम्यतां । ३ ग अपर । ४ घ–रसायनादि । ५ घयईर–दानानि । ६ अयघईरङ्ग—च । ७ घ—प ।

"समिद्धृतहविर्धान्यतिलान्वा मारुताशन । हुत्वा द्वादशसाहस्र गायत्र्या कृच्छ्रमाप्नुयादिति" ॥
द्वादशभिरधिक महस्र द्वादशसहस्र । याज्ञवल्क्योऽपि (प्रा ३१०)
" यत्र यत्र च सकीर्णमात्मान मन्यते जन । तत्र तत्र तिलैर्होमो गायत्र्या वाचन तथा" ॥
सकीर्ण पापयुक्त । वाचन दान तिलैरित्यत्रापि सबध्यते तिलदानमित्यर्थ । वेद पारायण सहितापारायण । अयुतगायत्रीभिरल्पान्तरितत्वात् । सहिताध्ययन यावत्त काल सावित्रीं जपेदिति अपरार्के प्रचेतःस्मृतेश्च । पराशरः
" कृच्छ्रोऽयुत तु गायत्र्या उदवासस्तथैव च । धेनुप्रदान विप्राय सममेतच्चतुष्टयमिति " ॥
उदवासोऽहोरात्रमिति महार्णवे । मार्कंडेयः
"प्राजापत्यक्रियाशक्तौ धेनु दद्यात्पयस्विनीं । धेनोरभावे दातव्य मूल्य तुल्य न सशय" ॥ इति ।
सवर्त्तः " गवामभावे दातव्य तुल्य मूल्य न सशय " इति । मूल्यमुक्त माधवीये ब्रह्मपुराणे " गवामभावे निष्क स्यात्तदर्द्ध पाद एव वा " । रूप्यपरिमाणे निष्कपरिभाषामाह याज्ञवल्क्यः (आ ३६९) " निष्क सुवर्णाश्चत्वार" इति । सुवर्ण चतुष्टय समतोलित रूप्य निष्कमित्यर्थ । लीलावत्यां
"वराटकाना दशकद्वय यत्सा काकिणी ताश्च पणश्चतस्र ।
" ते षोडश द्रम्म इवावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्क इति " ॥
मूल्यान्तरमपि प्रायश्चित्तविवेके षट्त्रिंशन्मते
"धेनु पचभिराढ्याना मध्याना त्रिपुराणिका । कार्षापणैकमूल्या हि पवित्राणा प्रकीर्तिता" ॥
दरिद्राणामिति क्वचित्पाठ । पुराण द्वात्रिंशत्कृष्णलमित रजत ।
" द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषक । ते षोडश स्याद्धरण पुराणश्चैव राजता " ॥
इति मिताक्षराया स्मृतेः । कार्षापणस्तु × "कार्षापण स विज्ञेय कार्षिकस्ताम्रिक पण " इति मनूक्तेः (८।१३७)।
नारदोक्तोऽपि
" कार्षापणो दक्षिणस्या दिशि रौप्य प्रवर्तते । पणैर्निबद्ध पूर्वस्या षोडशैव पण स तु " ॥
मूल्याध्याये कात्यायनः
" द्वात्रिंशत्पणिका गावश्चतुष्कार्षापणोवर । वृषे षट्कार्षापणका अष्टानवडुहि स्मृता ॥
" दशकार्षापणा धेनो अश्वे पञ्चदशैव त्विति " । एतेषा च गोमूल्यपक्षाणा शक्ताशक्त-भेदेन व्यवस्था यत्तु अपरार्के

१ घय—च्चतु । × कार्षापण स्तु विज्ञेयस्ताम्रिक कार्षिक पण इति मुद्रितमनुस्मृतिपुस्तके पाठ ।

" द्वादशैव सहस्राणि जपेद्देवीमुपोषितः । जलाते विधिवन्मौनी प्राजापत्योऽयमुच्यते ॥" इति जलाते जलसमीपे । तथा तत्रैव चतुर्विंशतिमतमुक्तं " अतिकृच्छ्रे पराके च प्राजापत्यत्रयं कुर्यात्कृच्छ्रे गोमिथुनमिति " । अत्र द्वादशसहस्रगायत्रीजपो गोमिथुनं च गौतमाद्युक्तप्राजापत्यविषयं । शक्तविषयं वा । तत्रैव

५ " अन्नदानहिरण्येन द्वादश ब्राह्मणान् शुचीन् । तर्पयेन्मारुताशी च श्रोत्रियान्कृच्छ्र उच्यते ॥
" उपोष्य श्रद्धया युक्तस्तिलपात्राणि घर्मतः । द्वादश ब्रह्मवादिभ्यः प्राजापत्येन तत्समं ॥
" स्वयमाहृत्य यो मूर्द्धा तृणभारानुपोषितः । दद्याद्गोमण्डले कृच्छ्रे द्वादशैव न संशयः ॥
" प्राणायामशतं कृत्वा द्वात्रिंशोत्तरमार्तिषु । अहोरात्रोषितस्तिष्ठेत्प्राङ्मुखे कृच्छ्र उच्यते ॥
" नमस्कारसहस्राणि द्वादशैव द्वदन्त । गोविप्रपितृदेवेषु कुर्यात्कृच्छ्रत्रयं भवेत् " ॥

१० तिलपात्राण्युक्तानि यमेमें

" तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमं । ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम् ॥
" द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतं " । वसिष्ठः
" अपि चेत्त्वरते कर्तुं दिवसं मारुताशनः । रात्रौ स्थित्वा जले विप्रः प्राजापत्येन तत्समं ॥
" गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् । कृच्छ्रमेकाहिकं प्रोक्तं दृष्टमङ्गिरसा स्वयं ॥

१५ "निश्यशीनो दिवा तिष्ठेत्त्रिरात्रं मारुताशनः । प्राजापत्यं विजानीयात्कूष्माण्डैर्जुहुयाद् घृतमिति"॥

पराशरः ( १२।६६ )

" कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयं । पुण्यतीर्थे नार्द्रशिरः स्नानं द्वादशसंख्यया " ॥

माधवीये स्मृत्यन्तरे

"प्राजापत्यं चरन्विप्रो यद्यशक्तः कथंचन । अहानि पञ्च विप्राग्र्यान् भोजयेत्संख्ययेप्सितान्" ॥

२० अत्र कपिंजलाधिकरणन्यायेन पञ्चस्वप्यहस्सु त्रयस्त्रयो विप्राः । पण्वः

" एवमध्ययनं कुर्यात्प्राजापत्यमथापि वा । स्याद्द्वादशसाहस्रं गया शुद्धिं विचक्षण " ॥
एकमध्ययनं सञ्चरसंहिताध्ययनम् । तथा षडुपवासैरपि प्राजापत्यं इति निबन्धकृतः ।

चतुर्विंशतिमते

"प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयं । पराकतप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु गास्तथैव " ॥

२५ सांतपनमत्र महत् । इतरत्र सार्द्धप्राजापत्योक्तेः । तथा च षट्त्रिंशन्मते

" पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत् । सान्तपनस्य वा स्थाने सार्द्धमशक्तौ मतमाचरेदिति " ॥

स्मृत्यर्थसारे ॥ " पराके पञ्च तप्तकृच्छ्रे षडिति " । अपरार्के मार्कंडेयः

" प्राजापत्यसमा धेनुस्तद्द्वयं कृच्छ्रतप्तके । पराके तु सुवर्णं स्याद्दिमश्रृङ्गी तथैव च " ॥ इति

१ ह लो । २ ख-गृध्या धयर-विप्रासन । ३ बद्दर-पुष्टिं ।

पराके सुवर्णधेनुद्वयमूल्यसम । हेमशृंगीग्रहणेन सकलकास्यदोहाद्युपस्कारवतीं धेनुं लक्षयति । गोरनुवृत्तौ । " एका कृच्छ्रे तिस्रश्चान्द्रायणे स्मृता " इति । मदनरत्ने स्मृतौ
"प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वय स्मृत। चान्द्रायणे पराके च तिस्रो गा दक्षिणास्तथेति"॥
वृद्धविष्णुः " चान्द्रायणमकुर्वाणा कुर्यु कृच्छ्रचतुष्टय" । एतद्यतिचान्द्रायणविषय । स एव
"चान्द्रायणपराकाभ्या निष्कृतिं यो न शक्नुयात्।स करोत्यात्मशुद्ध्यर्थं प्राजापत्यस्य पचकमिति" ५

इदमृषिचान्द्रायणपर । पिपीलिकायवमध्ययोरष्टधेनूक्ते । शिशुचान्द्रायणादौ च धेनुत्रयोक्ते । यत्तु चतुर्विंशतिमते " अष्टौ चान्द्रायणे देया प्रत्याम्नायविधौ सदेति " तत्पिपीलिकायवमध्यविषयमिति धनिन । धर्मविवृत्तौ चतुर्विंशतिमते च

" चान्द्रायण मृगारेष्टि पवित्रेष्टिस्तथैव च । मित्रविंदापशुश्चैव कृच्छ्रत्रयमथापि वा ॥ १०
" तिलहोमायुत चैव पराकद्वयमेव च । गायत्र्या लक्षमेक तु सामान्याहुर्मनीषिण ॥
" नित्यनैमित्तिकाना च काम्याना चैव कर्मणा। इष्टीना पशुबन्धानामभावे चरव स्मृता॥"इति।
कृच्छ्रातिकृच्छ्रे तु धेनुत्रय । अत्र

"विप्रदडोद्यमे कृच्छ्रस्त्वतिकृच्छ्रे निपातने । कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यंतरशोणित" ॥
इत्यतिकृच्छ्रे धेनुद्वयोक्तेस्तद्विपथनिपातनादधिकेऽसृक्पाते विहितस्य कृच्छ्रातिकृच्छ्रस्याति १५ कृच्छ्रादाधिक्यावगमाद्धेनुत्रय प्रत्याम्नायो गम्यते । यदा त्वतिकृच्छ्रे तिस्रस्तदा तु कृच्छ्रातिकृच्छ्रे ततोऽधिके चतस्र । तथा चोत्तरोत्तराधिक्येनाह हारीतः

" अनाश्रमी सवत्सर प्राजापत्य चरित्वाऽऽश्रममुपेयात् । द्वितीयेऽतिकृच्छ्र । तृतीये कृच्छ्रमत ऊर्ध्वं चान्द्रायणमिति " । चतुर्विंशतिमते

> " कृच्छ्रे पचाऽतिकृच्छ्रे त्रिगुणमहरहस्त्रिशदेव तृतीये २०
> चत्वारिंशच्च तप्ते त्रिगुणनगुणिता विंशति स्यात्पराके ।
> कृच्छ्रे सातापनाख्ये भवति षडधिका विंशति सैव हीना
> द्वाभ्या चान्द्रायणे स्यात्तपसि कृशतनुर्भोजयेद्विप्रमुख्यान् " ॥

अत्र सख्यान्वितमहरह पट भोजनान्वयि । तेन कृच्छ्रे प्रत्यह पचदश । एवमुत्तरत्रेति केचित् । युक्त [1] । सख्यावीप्सयो परस्परानन्वितयोरेव क्रियान्वय । तेन कृच्छ्रे पचसु दिने २५ ष्वेकैको भोज्य । अतिकृच्छ्रे पचस्वेकैकस्त्रि द्वौ द्वाविति पचदशैव । तृतीये कृच्छ्रातिकृच्छ्रे त्रिंशद्द्वादशदिने विभज्य भोज्या । सातपने चान्द्रायणे च विंशतौ त्रैगुण्यमन्वेति । सौम्य कृच्छ्रे एका धेनु । ब्रह्मकूर्चे द्वे पराके तिस्र । मासोपवासे सार्द्धसप्तेति निबंधकृतः । शूल

---

१ रय-पाठ ।

पाणिस्तु । पराके षच । चान्द्रायणे सार्द्धसप्त । शिशुचान्द्रायणे तप्तकृच्छ्रे च पादोनचतुष्टय । कृच्छ्रातिकृच्छ्रे सातपने च षट् । मासोपवासे पचदशेत्यूचे ।

अथ तीर्थप्रत्याम्नायाः । ब्रह्महत्याव्रतमुपक्रम्य भविष्यत्पुराणे

" विन्ध्यादुत्तरतो यस्य निवास परिकीर्तित । पराशरमत तस्य सेतुबन्धस्य दर्शन " ॥

५ विंध्योत्तरवर्तिनमुक्त्वा तत्रैव

" चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमन प्रायश्चित्त विनिर्दिशेत् " ॥

स्मृतिसंग्रहे स्मृत्यर्थसारे च " भागीरथ्या स्नान षष्टियोजनागतस्य षडब्दसम " । अत्र यात्रायोजनवृद्धावर्द्धकृच्छ्रवृद्धि । एकयोजनागतस्य मध्ये पर्वतादिभिर्व्यवधाने कृच्छ्रत्रय । तृतीयाशाधिकक्रोशादागतस्य भागीरथ्या विध्युक्तस्नानमेव कृच्छ्र ।

१० अशक्तस्य त्वर्द्धयोजनागतस्य । शक्तस्यापि मार्गस्य दुर्गमत्वे भागीरथीस्नानमर्द्धयोजनागतस्यैक कृच्छ्र इत्यादि कल्पयति । प्रयागस्नानषष्टियोजनागतस्य द्वादशाब्दसमं गगाद्वारे गगासागरसगमे चैव । यमुनास्नान विंशतियोजनागतस्य द्वादशाब्दसम । मथुराया द्विगुण सरस्वत्या चतुरब्दकृच्छ्रसम चत्वारिंशद्योजनागतस्य । प्रभासे द्वारवत्या च द्विगुण । अनयोर्नद्योयोजनवृद्धौ पादकृच्छ्रवृद्धि । दृषद्वतीशतद्रुविपाशावितस्ताशरावतीमरुद्वृधादिषु

१५ स्नान त्रिंशत्कृच्छ्रसम पचदशयोजनागतस्य । चन्द्रभागावेत्रवतीशरयूगोमतीदेविकाकोशिकीगडक्यादिदेवनदीषु स्नान षोडशकृच्छ्रसम[१] द्वादशयोजनागतस्य एतासु महानदीषु परस्परसगमे त्रिनदीफल । अन्यासु महानदीषु षट्कृच्छ्रसम । महानदेषु महानद्यर्द्ध । शोणमहानदे गगार्द्धफल । नदेषु नद्यर्द्ध वैरोचननदे महानद्यर्द्ध नर्मदाया चतुर्विंशतियोजनागतस्य चतुर्विंशतिकृच्छ्रसम । कुब्जिकासगमे द्विगुण । शुक्लतीर्थे चतुर्गुण ।

२० ताप्त्या दशकृच्छ्रसम दशयोजनागतस्य । पयोष्ण्यामष्टयोजनागतस्याष्टकृच्छ्रसम । तत्र तत्र सगमे द्विगुण । गोदावर्ष्यां षष्टियोजनागतस्य त्र्यब्दसम । त्रिंशद्योजनागतस्यैकाब्द सुतीर्थेषु प्रतिलोमानुलोमस्नान षष्टिकृच्छ्रसम । वजरासगमे प्रयागे तद्द्विगुण । तत्रगोदावरी भीमरथ्योर्वजरायाः ... त्रिगुण । कुशातर्पणे वजराया द्वादशयोजनागतस्य द्वादशकृच्छ्रसम गोदावर्यां विश्लेषे समुद्रात षड्गुण प्रणीताया चतुर्योजने । पूर्णाया तदर्द्ध योजने । कृष्णवेणाया

२५ पचदशयोजने पचदशकृच्छ्रसम । तुगभद्राया विंशतियोजनागतस्य विंशतिकृच्छ्रसम । मलापहारिण्यामष्टकृच्छ्रसममष्टयोजनागतस्य । निवृत्त्या षट्कृच्छ्रसम षड्योजनागतस्य गोदावर्यां यात्रायोजनवृद्धौ योजने पादकृच्छ्र । सिंहस्थे गुरौ सर्वत्र जान्हवीसम । कन्यास्थे गुरौ कृष्णवेण्या सर्वत्र जान्हव्यर्द्ध तुगभद्राया तुलास्थे गुरौ रवौ वा जान्हव्यर्द्ध आद्य कर्के रवौ च । कृष्णवेणाया मलापहारिणीसगमे प्रयागे विंशद्योजनागतस्य

१ घ-त्रिश ।

त्रिंशत्कृच्छ्रसम । भीमरथ्या सगमे प्रयागे द्विगुण । तुगभद्रासगमे त्रिगुण* निवृत्तिसगमे चतुर्गुणं । ब्रह्मेश्वरे पचगुण । पाताल्गमाया मल्लिकार्जुने षड्गुण । तत पूर्वं षष्ठिकृच्छ्रसम । लिंगाल्ये द्विगुण । समुद्रसगमे चैव । कावेर्य्यां महानद्या पचदशकृच्छ्रसम दशयोजनगतस्य । ताम्रपर्णीकृतमालापयस्विनीषु द्वादशयोजने द्वादशकृच्छ्रसम । महापादोद्भूता वेदाद्रिपादोद्भूताश्च नद्य स्वदैर्घ्यानुसारेण एकद्विनिकृच्छ्रफलदा । विन्ध्यशैलोद्भवा द्विगुणा । ५
हिमोद्भूतास्त्रिगुणा । स्मृतो पुराणे च यथाकथचिदनुक्तौ कुल्या निरात्रफला । अल्पनद्य कृच्छ्रदा । नद्यो द्विकृच्छ्रदा । महानद्यस्त्रिकृच्छ्रदा । सवत्र यात्रातुल्ती कृच्छ्रसख्या योजनसख्यया स्यात् । एकयोजनगादिपञ्चयोजनगाता स्रवत्य कुल्या । ततो द्वादशयोजनगाता अल्पनद्य । चतुर्विंशतियोजनगाता नद्य । चतुर्विंशतियोजनाधिक्गा महानद्य । समुद्रगाश्च महानद्य । यत्र महानदीसमाख्यास्ति ताश्च महानद्य । १०
उपवाससहित नदीस्नान कृच्छ्रसम । योजनादर्वागपि । शुनीगर्दभीचाडालीशूद्रीकष्टादि नद्य पापनद्यश्च वर्ज्या । सर्वत्र समुद्रस्नान दर्शे कार्य । देवतासमीपे सर सरिन्नदीसगमेषु सर्वदा कार्य । समुद्रस्नान पचदशयोजनगतस्य प्रख्यातदेवतासमीपे द्विगुण । तत्र स्नात्वा तद्देवतादर्शने त्रिगुण । सेतोर्गमन त्रिंशत्कृच्छ्रसम । त्रिंशद्योजनगतस्य । स्नात्वा रामेश्वरदर्शने षष्ठिकृच्छ्रसम । विंध्यदेशीयाना सेतुरामेश्वरे जान्हव्या च त्रिगुण फलम् । १५
जान्हवीकेदारयोश्च तथैव । दक्षिणदेशीयाना जान्हव्या षड्गुण । गगादेशीयाना सेतुरामेश्वरे षड्गुण । स्वदर्शने त्रिंशत्कृच्छ्रसम त्रिंशद्योजनगतस्य । यत्र गगासज्ञाऽस्ति तत्र चैव । श्रीरगपद्मनाभपुरपोत्तमचक्रकोटमहालक्ष्मीदर्शनलोणारस्थाने त्रिंशद्योजनगतस्य त्रिंशत्कृच्छ्रसम । केदारे त्रिगुण । सर्ववैष्णवमाहेश्वरसौरशाक्तादिपीठेषु दर्शने पचदशकृच्छ्रसम । प्रख्याते द्विगुण । अहोबलेपि तथा । श्रीशैलप्रदक्षिण षष्ठिकृच्छ्रसम । श्रीशैले एवं कश्रृंग २०
दर्शन द्वादशकृच्छ्रसम । अन्येषु प्रख्याततीर्थदेवदर्शनेषु षट्कृच्छ्रफल सिद्धक्षेत्रेऽन्यक्षेत्रे स्वयभूदर्शने त्रिंश कृच्छ्रसम त्रिंशद्योजनागतस्य । सर्वत्र कृच्छ्रसख्या योजनमान्यया ज्ञेया ।

इति तीर्थप्रत्याम्नाया ॥

अथ पातित्यहेतवः । गौतमः ( २१।१।२ ) " ब्रह्महत्यासुरापगुरुतल्पगमातृपितृयोनिसबन्धागस्तेननास्तिकनिंदितकर्माभ्यासिपतितात्यागपतितत्यागिन पतिता पातकसयोजकाश्च " । मातापितृयोनिसबद्धा गोमातृष्वसृपितृष्वसृात्मभगिनीगामी । स्तेयी सुवर्णतत्समयो । नास्तिको वेदाप्रामाण्यवादी । अपतितत्यागी गुरुमभिशप्य तेंस्यक्ता पातकसयोजका स्वससर्गेण दोषहेतव इति भाश्यः । अपरार्के तु पातकसयोजका प्रयोजकादयस्तेऽपि पतिता इति । एव कल्पतरावपि । यमः २५

* वर्धनपाठ । २ ख-ना । ३ ङ-तथैव । ४ ङ ह्य । ५ ङ-स्वा ।

" मातृष्वसा मातृसखी दुहिता न पितृष्वसा । मातुलानी स्वसा श्वश्रूर्गत्वा सद्यः पतेन्नरः" ॥ इति ।
मनुः ( १०।९२ ) " सद्यः पतति मांसेन लाक्षया लवणेन च " । स एव ( ५।१९ )
" छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटं । पलांडुं गृंजनं चैव मत्या जग्ध्वा पतेन्नरः " ॥
यमः ( २।३ )
५ " जलाग्न्युद्बंधनभ्रष्टाः प्रव्रज्यानाशकच्युताः । विषप्रतपनप्रायशस्त्रघातहताश्च ये ।
"नवैते प्रत्यवसिताः सर्वलोकबहिष्कृता " इति ।

उपनयनमुख्यगौणकालातिक्रमेण व्रात्यानां पातित्यमाह याज्ञवल्क्यः (आचारे ३८.)
" अत ऊर्ध्वं पतंत्येते सर्वधर्मबहिष्कृताः । सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः "॥
आश्वलायनोऽपि ( १।१९।६–७ ) "अत ऊर्ध्वं पतितसावित्रीका भवंति । नैतानुप-
१० नयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुरिति " ॥
अत्रिः
" आरूढपतितं विप्रं मंडलाच्च विनिःसृतं । उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चांद्रायणं चरेत्"॥
आरूढो गृहस्थव्यतिरिक्त आश्रमी ब्रह्मचर्यस्खलनाद्द्विजातिकर्मानधिकारी । मंडलात्स्व-
सजातीयेभ्यो विनिःसृतो बहिर्भूतः । उद्बद्ध उद्बंधनात् च्युत आत्महंता ।
१५ कृमिदष्टः श्वादिदंशक्षते उत्पन्न कृमिः ॥ मनुः ( ११।१७५ )
"चांडालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति"॥
गौतमः (२१।८–९) "न स्त्रीषु गुरुतल्पं पततीत्येके भ्रूणहनने हीनवर्णसेवायां स्त्रीपततीति"।
मातृपितृयोनिसंबंधागः पततीत्यस्यापवादः । तासु गुर्वंगनान्यतिरिक्तासु गच्छन्नपि न
पततीत्येके मन्यंते । किंतु प्रायश्चित्तीयते । गौतमस्तु पततीति मन्यते । ' सोऽयं बुद्ध्यबुद्धि-
२० पूर्वापेक्षोऽभ्यासानभ्यासापेक्षो वा व्यवस्थितो विकल्प ' इति भर्तृयज्ञः । भ्रूणहनने गर्भवधे ।
हीनसेवायां स्वापेक्षया हीनवर्णपुरुषगमने प्रतिलोमगमने च । याज्ञवल्क्यः ( प्रा. २९८ )
" नीचाभिगमनं गर्भपातनं भर्तृहिंसनं । विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवं " ॥
अपिशब्दाद्ब्रह्महत्यादीन्युपपातकान्यप्यभ्यस्तानि । नीचो हीनवर्णः शूद्रः । तद्गमनं
च गर्भोत्पत्यंतं । अत एव
२५ " व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते । गर्भभर्तृवधादौ च तथा महति पातके "
इति याज्ञवल्क्यवाक्ये ( आ. ७२ ) शूद्रकृते गर्भे इति प्राचां व्याख्यानं ।
" ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः । अप्रजाता विशुद्ध्यंति प्रायश्चित्तेन नेतरा "॥
इति वासिष्ठात् (२१।१२) । यत्तु शौनकः " पुरुषस्य यानि पतननिमित्तानि स्त्रीणामपि
तान्येव । ब्राह्मणी हीनवर्णसेवायामधिकं पततीति " तत्र हीनवर्णसेवा गर्भातं शूद्रगमनं
३० प्रतिलोमगमनमात्रं च । वसिष्ठः (२८।७)

+ द्विजेऽति मुद्रित मनुस्मृति पुस्तके पाठः । १ घ–स्मृता

" त्रीणि स्त्रिया पातकानि लोके धर्मविदो विदु । भर्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातन "॥
भ्रूणहत्योक्तिर्दृष्टान्तार्था । स एव ( वासिष्ठे २१।१० )
' चतस्रस्तु परित्याज्या शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुंगितोपगता च या "॥
जुंगित प्रतिलोमज । शिष्यगमनादीनामपि पातित्यहेतुपतिवधसाहचर्यात्पातित्यहेतुत्व ।
त्यागश्च वस्त्रान्नगृहवासादिजीवनहेतुत्वावच्छेदेन। नीचाभिगमनादावपीदमेव त्याग । प्रायश्चित्त ५
चिकीर्षतीना त्वत्यागमाह याज्ञवल्क्यः ( प्रा २९७ )
" पतितानामेप एव विधि स्त्रीणा प्रकीर्तित । वासो गृहान्तिके देयमन्न वास सरक्षण "॥

मनुः

*"पतत्यर्द्धं शरीरस्य यस्य भार्या सुरा पिबेत्। पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते "॥ इति ।
' द्विजातिभार्यायाः शूद्राया सुरापाननिषेधार्थमिदमिति ' विज्ञानेश्वरः (पृ २६१प १८) १०
माधवस्तु ब्राह्मण्यादीनामप्यय निषेध । स्त्रिया भर्तुस्ससर्गेऽपि दोषार्थमुत्तरार्द्ध । सहा
धिकारस्त्रिया अर्द्धशरीरत्व । पतितमर्द्धशरीर यस्येति बहुव्रीहिरित्यूचे । तन्न । ब्राह्मण्यादी
न्प्रति प्रतिषेधे वचोवैयर्थ्यापत्ते । बहुव्रीहौ लक्षणापत्तेश्च । अतो विज्ञानेश्वर एव सम्यगूचे।
अथ साधारणप्रायश्चित्तानि । गौतमः ( १९।१७-२० ) " सवत्सर षण्मास
श्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहो द्वादशाह षडहस्त्र्यहोऽहोरात्र इति काला । एतान्यनादेशे १५
विकल्पेन क्रियेरन्नेनासि गुरूणि गुरूणि लघूनि लघूनि । कृच्छ्रातिकृच्छ्रे चान्द्रायणमिति
प्रायश्चित्तमिति " । विष्णुधर्मोत्तरे
" सायप्रातस्तथा कृत्वा वासुदेवस्य कीर्तन । सर्वपापविनिर्मुक्त स्वर्गलोके महीयते "॥
प्रभासखंडे श्रीभगवद्वाक्यं
"नाम्ना मुख्यतर नाम कृष्णाख्यंय परतप । प्रायश्चित्तमशेषाणा पापाना मोचक पर "॥ वाराहे २०
" वासुदेवस्य सकीर्त्य सुरापो व्याधितोऽपि वा । मुक्तो जायेत नियत महाविष्णु प्रसीदति ॥
" गोविंदेति तथा प्रोक्ते भक्त्या वा भक्तिवर्जिते । दहते सर्व पापानि युगान्तेऽग्निरिवोत्थित " ॥

विश्वामित्रः

" कृच्छ्रचान्द्रायणादीनि शुद्धयभ्युदयकारण । प्रकाशे च रहस्येव अनुक्ते सशये स्फुटे ॥
"प्राजापत्य सातपन शिशुकृच्छ्र पराकक । अतिकृच्छ्र पर्णकृच्छ्र सौम्यकृच्छ्रोऽतिकृच्छ्रक ॥ २५
" महासातपनः शुद्ध्यै तप्तकृच्छ्रस्तु पावन । जपोपवासकृच्छ्रस्तु ब्रह्मकूर्चस्तु शोधक ॥
"एते न्यस्ता समस्ता वा प्रत्येक द्वयेकशोऽपि वा । पातकादिषु सर्वेषु उपवासेषु यत्नत ॥
" कार्याश्चान्द्रायणैर्युक्ता केवला वा विशुद्धये । शिशुचान्द्रायण प्रोक्त यतिचान्द्रायणं तथा ॥

* मनुस्मृतावय श्लोको न लभ्यते पराशरसहितायां तु अयमेव पाठो दृश्यते ( पराशर॰ १०।२७ ) ।
वासिष्ठे २१।१५ । ज्ञ ज ।

" यवमध्य तथा प्रोक्त तथा पिपीलिकाकृति । उपवासस्त्रिरात्र वा मास पक्षस्तदर्द्धक ॥
" षडहो द्वादशाहादि कार्य शुद्धिफलार्थिना । उपपातकयुक्तानामनादिष्टेषु चैव हि ॥
" प्रकाशे वाऽप्रकाशे वा अभिसन्ध्याद्यपेक्षया । जातिशक्तिगुणान्दृष्ट्वा सकृद्बुद्धिकृत तथा ॥
" अनुबन्धादिक दृष्ट्वा सर्व कार्य्य यथाक्रम ॥
५ "प्रकाश उक्त यत्किञ्चिद्द्विंशद्भागो रहस्यके। त्रिंशद्भाग षष्ठिभाग कल्पो जात्याद्यपेक्षया "॥
याज्ञवल्क्यः ( प्र ३२७ )
" अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च । धर्मार्थं न चरेदेतच्चन्द्रस्येति सलोकताम् " ॥
षड्त्रिंशन्मते त्रयाणा समुच्चय प्रतिपादित
" यानि कानि च पापानि गुरोर्गुरुतराणि च।कृच्छ्रातिकृच्छ्रचान्द्रैस्तु शोध्यते मनुरब्रवीत् "॥
१० केवलप्राजापत्यस्य तु नैरपेक्ष्य चतुर्विंशतिमतेऽभिहित " लघुदोषे त्वनादिष्टे प्राजापत्य समाचरेदिति " । उशनसा तु द्वयो समुच्चय उक्त
" दुरिताना दुरिष्टाना पापाना महतामपि । कृच्छ्र चान्द्रायण चैव सर्वपापप्रणाशनमिति "॥
दुरितमुपपातक । मनुना तु पराकस्य नैरपेक्ष्यमुक्त ( ११।२१९ ) "पराको नाम कृच्छ्रोऽय सर्वपापापनोदन " इति । गौतमोऽपि ( २१।२१–२३ ) " प्रथम चरित्वा
१५ शुचि पूत कर्मण्यो भवति। द्वितीय चरित्वा यदन्यन्महापातकेभ्य पाप कुरुते तस्मात्पापात्प्रमुच्यते । तृतीय चरित्वा सर्वस्मादेनसो मुच्यत " इति । प्रथमादिपदे कृच्छ्रोऽति कृच्छ्र कृच्छ्रातिकृच्छ्रश्चोच्यते । हारीतः
" चान्द्रायण पराक च तुलापुरुष एव च । गवा चैवानुगमन सर्वपापप्रणाशनमिति " ।
तथा "गोमूत्र गोमय क्षीर दधि सर्पि कुशोदक। एकरात्रोपवासश्च श्वपाकमपि शोधयेदिति"॥
२० एतेषा व्यवस्था विष्णुपुराणे
" पापे गुरुणि गुरूणि स्वल्पान्यल्पे च तद्विद । प्रायश्चित्तानि मैत्रेय जगु स्वायम्भुवादय " ॥
भविष्यत्पुराणेऽपि
" एव विषयभेदेन व्यवस्थाप्यानि पुत्रक । प्रायश्चित्तानि सर्वाणि गुरूणि च लघूनि च ॥
" अन्यथा हि महाबाहो लघूनामुपदेशत । गुरूणामुपदेशो हि निःप्रयोजनता व्रजेदिति"॥
२५ गौतमेनाप्युक्त ( १९।१९ ) " एनसि गुरुणि गुरूणि लघुनि लघूनीति " । एवमन्यान्यपि द्रष्टव्यानि ।
अथ महापापसाधारणप्रायश्चित्तानि । शंखः
" नित्य त्रिषवणस्नायी कृत्वा पर्णकुटीं वने । अध शायी जटाधारी पर्णमूलफलाशन ॥
" ग्राम विशेद्वा भिक्षार्थी स्वकर्म परिकीर्तयेन् । एककाल समश्नानो वर्षे द्वादशमे गते ॥

१ घ-निरपेक्षोऽपि प्राजापत्यश्चतुर्विंशतिम । २ ड-पाठ ।

" स्वर्णस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः । व्रतेनैतेन शुद्धयन्ति महापातकिनस्त्विमे " ॥
शिववाक्यं
" आराध्यमानं मां रामं पश्येयुरिह सागरे । महापातकयुक्ता ये तेषां पापं विनश्यति " ॥
विष्णुः ( ३९—६ )
" अश्वमेधेन शुद्धयेयुर्महापातकिनस्त्विमे । पृथिव्यां सर्वतीर्थानां तथाऽनुसरणेन च " ॥ ५
महापापानुवृत्तौ च्यवनः " एतेषां प्रायश्चित्तं भवति पृथिवीप्रदक्षिणामावर्त्तेत " । स एव । ' उभयशिरसं वा प्रदाय ब्राह्मणेभ्यः " इति । उभयशिरसमुभयतोमुखीं ।
आपस्तंबः ( १।९।२९।१०—११ ) " अथाप्युदाहरंति । स्तेयं कृत्वा सुरां पीत्वा गुरुदारान् गत्वा ब्रह्महत्यां च कृत्वा चतुर्थकालमितभोजिनः स्युरपोऽभ्युपेयुः । सवनानुकल्पस्थानासनाभ्यां विहरंत एते त्रिभिर्वर्षैरपपापं नुदंति " । महापापानुवृत्तौ विश्वामित्र १० कश्यपौ
" वत्सरत्रितयं कुर्यान्नरः कृच्छ्रं विशुद्धये । आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् ॥
" हिरण्यदानं गोदानं भूमिदानं तथैव च । नाशयन्त्याशु पापानि महापातकजान्यपीति " ॥
इति सर्वपातकसाधारणप्रायश्चित्तानि ॥

अथ पापभेदाः १५

विष्णुः " अतिपातकमहापातकानुपपातकोपपातकेषु प्रवर्त्तते । जातिभ्रंशकरेषु सङ्करीकरणेऽपात्रीकरणेषु मलावहेषु प्रकीर्णकेषु च " । तत्र महापापान्याह मनुः ( ११।५४ )
" ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः । महान्ति पातकान्याहुः संयोगश्चैव तैः सह " ॥
ब्रह्महत्या साक्षाद्विप्रमारणं। अकामकृते तस्मिन् प्रायश्चित्तमाह। याज्ञवल्क्यः ' (प्रा २४२)
' शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन्। ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् '॥ २०
शिरःकपाली स्वहतविप्रशिरोस्थिधृक् । ध्वजः आरोपितशवशिरोदंडः । यत्तु मध्यमांगिराः
" गवां सहस्रं विधिवत्पात्रेभ्यः प्रतिपादयेत् । ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव चेति " ॥
तन् " द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत् " इत्येतद्वाक्यविहितद्विगुणव्रतचरणाशक्तविषयं । यच्च शंखः ' प्रमाप्य द्वादश संवत्सरान् षट् त्रीन् सार्द्धं संवत्सरं व्रतान्यादिशेत्तेषामंते गोसहस्रं तदर्धं तस्यार्द्धमर्द्धं च दद्यात्सर्वेषां वर्णानामानुपूर्व्येणेति " २५
तन्मातापितृभ्रातृगुर्वादिविषयम् । आनुपूर्व्येणेति तु द्वादशाब्दषडब्दत्र्यब्दसार्धाब्दानां गोसहस्रतदर्धतदर्धानां सर्वेषां वर्णानां शक्ताशक्तबोधयति न तु द्वादशाब्दादिव्रतचतुष्टयं गोसहस्रचतुष्टयसहितब्राह्मणादिवर्णचतुष्टयस्य । तथा च " पर्षद्या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता । वैश्यानां त्रिगुणा प्रोक्ता तदर्द्धं च व्रतं स्मृतं"मित्यंगिरसा " शूद्रो वा ब्राह्मण

१ ब्रह्महत्यामहत्वा चतुर्थकालामित वस्य इत्यापस्तम्बीयपाठ ।

हत्वा प्रायश्चित्तचतुष्टयमिति " भविष्यवचनेन च ब्राह्मणापेक्षयेतरवर्णानामधिकप्रायश्चित्त विधानात् । इदं च मतं यावज्जीवनव्रताचरणाशक्तस्य । शक्तस्य तु भविष्यपुराणे
" मातरं पितरं हत्वा सोदरं भ्रातरं तथा । गुरुं हत्वा श्रोत्रियं च आहिताग्निमथापि वा ।
" यावज्जीवं चीर्त्वा प्रतिहन्ता विशुद्ध्यतीति " । एवं च यदापस्तम्बेन चोक्तं "विप्रहाऽरण्ये
५ कुटीं कृत्वा वाग्यतः शवशिरोध्वजः । शाणीयतन्त्व्यामात्मन्युपरि जान्वाऽऽच्छादयेदि "
त्युपक्रम्य " एतदेव व्रतं योत्तमादुच्छ्वासाचरेत् । तास्मिंल्लोके प्रत्यापत्तिर्विद्यत इति " ॥
तेन मातापितृगुर्वादिवधविषयं । मनुः ( ११।७४—७७ )
"यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा । अभिजिद्विश्वजिद्भ्यां वा त्रिवृताऽग्निष्टुताऽपि वा ॥
" अपन्वाऽन्यतमं वेदं योजनानां शतं व्रजेत् । ब्रह्महत्यापनोदाय मितभुङ्नियतेंद्रियः ॥
१० "सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदं ॥
" हविष्यभुग्वाऽनुसरेत्प्रतिस्रोतं सरस्वतीं । जपेद्वानियताहारस्त्रिः कृत्वो वेदसंहितामिति " ॥
'सर्वस्वं वा धनं वा गृहं वेति प्रायश्चित्तत्रयमिति' विज्ञानेश्वरः (पृ२९४)।'उत्तरार्द्धं पूर्वार्द्धस्यैव शेषः । न स्वतन्त्रप्रायश्चित्तद्वयविधानार्थमिति मेधातिथिः ।युक्तं चैतत्।कियत्सर्वस्वमित्याकाङ्क्षा-पूरणात् । अन्यथा पणादिसर्वस्वदानेऽपि शुद्धिः स्यात् । काश्यपः " आत्मतुल्यं
१५ सुवर्णं वा दद्याद्वा विप्रतुष्टिकृदिति " । एतेषां च प्रायश्चित्तानां व्यवस्थोक्ता भविष्ये
" जातिमात्रं यदा विप्रं हन्यादमतिपूर्वकं । वेदविच्चाग्निहोत्री च तत्र तस्य भवेदिदं ॥
" जपन्वाऽन्यतमं वेदं योजनानां शतं व्रजेदिति " । तत्रैव
" जातिमात्रं यदा हन्याद्ब्राह्मणं ब्राह्मणो गुरुः । वेदाभ्यासविहीनो वै धनवानग्निवर्जितः ॥
" प्रायश्चित्तं तदा कुर्यादिति पापविशुद्धये । धनं वा जीवनायालं गृहं वा सपरिच्छन्नमिति " ॥
२० एतस्मिन्नेव विषये पराशर आह ( १२।५८—६१ )
" चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ॥
" सेतुबंधपथे भिक्षां चातुर्वर्ण्यात्समाहरेत् । वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः ॥
" अहं दुष्कृतकर्मा वै महापातककारकः । गोकुलेषु च गोष्ठेषु ग्रामेषु नगरेषु च ॥
" *तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च । एतेषु ख्यापयेदेनः पुण्यं गत्वा च सागरं ॥
२५ " ब्रह्महा विप्रमुच्येत स्नात्वा तस्मिन्महोदधौ ॥
" ततः पूतो गृहं प्राप्य कृत्वा ब्राह्मणभोजनम् । दत्वा वस्त्र पवित्राणि पूतात्मा प्रविशेद्गृहं ॥
" गवां चाऽपि शतं दत्वा चातुर्विद्याय दक्षिणां । एवं शुद्धिमवाप्नोति चातुर्विद्यानुमोदितः "॥
अत्र विशेष उक्तो भविष्ये

*तथा १ व शुद्ध । २ ङ-प्रासषु ।

-" विंध्यादुत्तरतो यस्य निवासः परिकीर्त्तितः । पराशरमतं तस्य सेतुबंधनदर्शनामिति "॥ तत्रैव
" तिरस्कृतो यदा विप्रो ह्रियमाणो मृतो यदि। निर्गुणः सहसा क्रोधाद्गृहक्षेत्रादिकारणात् ॥
" त्रैवार्षिकं व्रतं कुर्यात्प्रतिलोमां सरस्वतीं । गच्छेऽद्वापि विशुद्धयर्थं तत्पापस्येति निश्चितम् "॥
तत्रैव "अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि । क्रोधाद्वै म्रियते यस्तु निर्निमित्तं तु भर्त्सितः ॥
" वत्सरत्रितयं कुर्य्यान्नरः कृच्छ्रं विशुद्धय " इति । एतस्मिन्नेव विषये निमित्तिनो निर्गुणत्वे　५
तत्रैव
" केशश्मश्रुनखादीना कृत्वा तु वपन वैने । ब्रह्मचर्यं चरन्विप्रो वर्षेणैकेन शुद्ध्यतीति "॥
षट्त्रिंशन्मते
" षंढं वा ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । चांद्रायणं वा कुर्वीत पराकद्वयमेव वेति "॥
विप्रवधे व्यासः　१०
" ब्रह्महाऽब्दत्रय विप्र गायत्रीमभ्यसेत्सदा । प्राणायामशतं कुर्यात्प्रत्यहं नियतः शुचिः ॥
" भिक्षाशी निवसेन्नित्यमरण्ये संयतेंद्रियः । षोडश ब्राह्मणान्विप्रो भोजयित्वा समाहितः ॥
" प्रयच्छेद्वस्त्रयुग्मानि हिरण्यं वाऽपि शक्तित " इति । एतानि च प्रायश्चित्तान्यनुपेतब्राह्मणवधेऽपि ज्ञेयानि । ब्राह्मण्याविशेषात् । तत्तु षडब्दं निर्गुणविप्रवधे षडब्दस्य वक्ष्यमाणत्वात् । एतस्याप्युपनयनाभावेन निर्गुणत्वात् । कामतो विप्रवधे मनुः　१५
" प्राणातिकं तु यत्प्रोक्तं प्रायश्चित्त मनीषिभि । तच्च कामकृतं प्राप्य विज्ञेयं नात्र संशयः "॥
कालिकापुराणे
-" इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विज । कामतो ब्राह्मणवधे जीवतो नास्ति निष्कृतिः "॥
कामानुवृत्तावंगिराः
" शरीरं न दहेद्यावद्ब्रह्महा पापकृत्तम. । तावत्तस्य न शुद्धिः स्याद्भगवान् मनुरब्रवीत् "॥　२०
मरणेऽशक्तस्यापवाद उक्तस्तेनैव " स्यात्त्वकामकृते यत्ताद्द्विगुणं बुद्धिपूर्वक " इति ।
मध्यमांगिराः " विहित यदकामाना कामात्तद्द्विगुणं भवेदिति " । क्वचित्तदपवादो भविष्ये
" ब्राह्मणं जातिमात्रं तु कामतो विनिपात्य वै । चरेद्द्वादशवर्षाणि गुणी निर्गुणमव हीति " । तत्रैव
" हत्वा तु प्रहरंतं वै ब्राह्मण वेदपारगं । कामतोऽपि चरेद्वीर द्वादशाब्दान्त्यमुत्तमम् " ॥
अकामतस्त्वर्द्धं । क्षत्रियादीना विशेषो भविष्ये　२५
" हत्वा तु क्षत्रियो विप्रं गुणाढ्यमिह कामतः । प्रायश्चित्तं चरेद्वीर विधिवत्कायशुद्धये ॥
"लक्ष्यः शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः।प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा"॥
इति । पतिताग्निषु विशेषमाह कात्यायनः
" महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि । पुत्रादि पालयेदग्नीन्युक्त आ दोषसंक्षयात् ॥

१ ज्ञ-स्य । २ घय-यदि । ३ यरघ-तथा । ४ ज्ञ-ष्य । ५ अई—यत्तु । ६ ई-प्रमाप्या;-ज्ञ-प्रामाप्य, यरघ-प्रथमाकामतो ।

" प्रायश्चित्तं न कुर्याद्य कुर्वन्वा म्रियते यदि । गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदमिति"॥ पाल्नविधानात्पुत्रोऽग्निहोत्रहोममपि कुर्यात् । उशनाः

"आहिताग्निस्तु यो विप्रो महापातकवान् भवेत् । प्रायश्चित्तेन शुद्ध्येत तद्धीना तु का गतिः ॥

"वैतानं प्रक्षिपेत्तोये शालाग्निं शमयेद्बुधः " । पतितेनापि प्रायश्चित्ताङ्गत्वेन सन्ध्यावन्दनं कार्यं

५ "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यत्किञ्चित्कुरुते कर्म न तस्य फलभाग्भवेदिति " दक्षोक्ते (२।१९)। आरब्धप्रायश्चित्तमहापातकिनमुपक्रम्य " सम्यक्सन्ध्यामुपासीत त्रिकालं स्नानमाचरेदिति " स्मृतेश्च । ब्रह्मवधव्रतमन्यत्राप्यतिदिशति याज्ञवल्क्यः ( प्रा २९१ ) "यागस्थक्षत्रविड्घाती चरेद्ब्रह्महणि व्रत । गर्भहा च यथावर्णं तथात्रेयीनिषूदक" इति । व्रतपदात्त देवातिदिश्यते न मरण । गर्भश्च विज्ञातो सम्भूत । ज्ञाते तु ब्राह्मण्याभावान्न तद्वध इद

१० प्रायश्चित्तं किन्तु गोलकादिवधनिमित्तरूपनिमित्तमिति निबंधकृतः । यद्यप्याचार्यमते कुण्डगोलकादिषु ब्राह्मण्यमस्त्येव तथापि कुण्डगोलकादिवधप्रायश्चित्तमेव । अन्यथा तद्विधि र्व्यर्थं स्यात् । स्त्रीपुन्नपुंसकविशेषत्वेनाज्ञातश्चेत् स्त्रीत्वेन ज्ञाते उपपातकप्रायश्चित्त ब्राह्मण्यादिस्त्रीमात्रवधस्योपपातकत्वामिति विज्ञानेश्वरादयः ( पृ १९६ ) । नपुंसकत्वेन ज्ञाते षढवधप्रायश्चित्तं पूर्वमुक्तम् । आत्रेयीमाह वसिष्ठः ( २०।३९—३६ )

१५ " रजस्वलामृतुस्नातामात्रेयीमाहु । त्रयोदशादिनानि अत्र ह्येष्यदपत्य भवतीति " । रजस्वला त्रिदिन । तदूर्ध्वं त्रयोदशेति षोडश । अत्र ह्येष्यदिति हेतुना वन्ध्याव्युदास । यमस्तु "जन्मप्रभृतिसंस्कारैः संस्कृता मन्त्रवच्च या । गर्भिणी त्वथ वा या स्यात्तामात्रेयीं विदुर्बुधा "इति॥ विष्णुः ( ५०।५—६ ) " एतन्महाव्रतं ब्राह्मणं हत्वा द्वादशवत्सरं कुर्यात् । यागस्थं क्षत्रियं वैश्यं गर्भिणीं रजस्वलां वाऽत्रिगोत्रां वेति " ॥ यत्त्वङ्गिराः

२० " आहिताग्नेर्द्विजातेस्तु हत्वा पत्नीमनिंदिताम् । ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव चेति "॥ तद्यागस्थपत्नीपरं । " सवनस्थां स्त्रियं हत्वा चरेद्ब्रह्महणि व्रतमिति " पराशरोक्तेः ( १२।६६ ) । ब्रह्मवधव्रत प्रक्रम्य मनुः ( ११।८८ )

"उक्त्वा चैवानृतं साक्ष्ये प्रतिरभ्य गुरुं तथा । अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधमिति"॥ विप्रवधफलत्वेन साक्ष्यनृतोक्ति । स्त्री सवनस्था । यथावर्णमित्यनुवृत्तौ । याज्ञवल्क्यः

२५ ( प्रा २९२ ) " चरेद्व्रतमहत्वाऽपि घातार्थं चेत्समागतः " । अत्रातिदेशित्र त्वात्पादोनमिति मदनादयः । अथ सवनस्थक्षत्रियादिवधे मनुः ( ११।१२७—१२८ ) " अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । ऋषभैकसहस्रा गा दद्याच्छुद्ध्यर्थमात्मनः ॥

---

१ घ ग—चार घ—मार । आ गुर्विणी—मुद्रित विष्णुपाठ । २ नह्रा—प्रा । ३ घ—स्त्री ने ज्ञाने । ई—स्त्रीत्वेद ज्ञात । ४ ड्ग—अनति ।

" त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतं " ॥ गोसहस्रं सवनस्थवधेति धनाढ्यस्य तपस्यशक्तस्येति मेधातिथिः ।

" वैश्यहाऽब्दं चरेदेतद्द्याद्वैकशतं गवां । षण्मासान् शूद्रहाऽप्येतद्धेनूर्दद्याद्दशाथ वेति " ॥ कामतस्तु हारीतः

" ब्राह्मणं क्षत्रियं हत्वा षड्वर्षाणि व्रतं चरेत् । वैश्यं हत्वा चरेदेव व्रतं त्रैवार्षिकं द्विजः ॥ ५

" शूद्रं हत्वा चरेद्वर्षं ऋषभैकादशाश्च गा इति " ॥ श्रोत्रियवधे तु स एव

"तुरीयोन क्षत्रियस्य वधे ब्रह्महणि व्रतं । अर्द्धं वैश्यवधे कुर्यात्तुरीयं वृषलस्य तु " ॥ यमः

" कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथाचरेत् । दशासल्याश्च गा दद्यादगच्छेदो यदा भवेत् " ॥ अगच्छेदे एतेषां समुच्चय इति शूलपाणिः । योगीश्वरः ( प्रा. २९३ )

"विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने। कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते"॥ १०

दण्ड शस्त्रस्याप्युपलक्षकं । बृहस्पतिः

"काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् । अस्थिभेदेऽतिकृच्छ्रं तु पराकं वाऽङ्गकर्तने" ॥

याज्ञवल्क्यः ( प्रा. २९२ )

" गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः । बध्वा तु वाससा क्षिप्रं प्रसाद्योपवसेद्दिनं " ॥

सुमंतुः " देवर्षिब्राह्मणाचार्यमातापितृनरेन्द्राणां प्रतिषेधने आक्रोशने जिह्वा दहेत्सहिरण्यं १५ दद्यादिति " । एतदभ्यासविषयं । यमः

" आक्रम्य ब्राह्मणं कण्ठे प्रायश्चित्तं विधीयते । त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्" ।

मिथ्याभिशंसने याज्ञवल्क्यः (प्रा २८९ )

" मिथ्याभिशंसने दोषो द्विः समो भूतवादिनः । मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् " ॥

प्रायश्चित्तमाह वसिष्ठः ( २३।३९ ) २०

" ब्राह्मणमनृतेनाभिशस्य पतनीयेनापतनीयेन वा मासमब्भक्षः शुद्धवतीरावर्तयेत् " ।

शुद्धवती ' एतोन्विन्द्रमि'त्याद्या । याज्ञवल्क्यः ( प्रा २८६ )

" महापापोपपापाभ्यां योऽभिशंसेन्मृषा परं । अब्भक्षो मासमासीत स जापी नियतेन्द्रियः " ॥

इदं च उपपापाभिशापे । आवृत्ते सकृच्च महापापाभिशंसने गुरुविषये कामतः सदावृत्तौ तु

शंखलिखितौ " नास्तिकः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्या २५ भिशंसी चेत्येते षड्वर्षाणि ब्राह्मणगृहेषु भैक्षं चरेयुः । संवत्सरं धौतभैक्ष्यमश्नीयुः षण्मासान्वा गा अनुगच्छेयुरिति " । एतत्सजातीयेन सजातीयेऽभिशस्ते । विजातीये तु

" प्रतिलोमापवादे तु द्विगुणत्रिगुणो दमः । वर्णानामानुलोम्ये तु तस्मादर्द्धार्द्धहानितः इति "

( व्य. २०७ ) याज्ञवल्क्योक्त दण्डानुरूपं बोध्यं । अथ प्रसङ्गान्मिथ्याभिशस्तस्य याज्ञवल्क्यः ( प्रा. २८७ ) ३०

" अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा । निर्वपेच्चु पुरोडाशं वायव्यं पशुमेव च " । एतदुपपातकविषयं । अतिपातके तु " एतेनाभिशस्तो व्याख्यात इति " वासिष्ठं ( २३।३७ ) । मासमब्भक्षणं । अतिपापे महापापे च पैठीनसिः " अनृतेनाभिशस्यमानः कृच्छ्रं मासं चरेत् । पातकेषु द्विमासं कृच्छ्रमिति " । जातिमात्रक्षत्रियादिवधे

५ तु मनुः ( ११।१२६ )

"तुरीयो ब्रह्महत्याया क्षत्रियस्य वधे स्मृत । वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश"॥ इति। " क्षत्रियस्य वधं कृत्वा चरेच्चान्द्रायणत्रयं । वैश्यस्य तु द्वयं कुर्याच्छूद्रस्यैकमेव तु " ॥ अस्मिन्नेव विषये मनूक्तानि त्रैमासिकद्वैमासिकमासिकान्युपपातकसामान्यप्रायश्चित्तानि ज्ञेयानि । अशक्तस्तु याज्ञवल्क्यीयं त्रिरात्रोपवाससहितवृषभैकादशगोदानं । मासं

१० पयोव्रतं वा । " कृच्छ्रातिकृच्छ्रौ चेति " क्रमात् ज्ञेयं । न चैषां सामान्यविहितत्वाद्विशेषविहितैः प्रायश्चित्तैर्बाधः । स्त्रीशूद्रविट्क्षत्रवध इति क्षत्रियादिवधस्योपपातकत्वोक्तेरानर्थक्यापातात् । एवं सर्वेष्वप्युपपातकेषु सामान्यविशेषविहितानां व्यवस्था ज्ञेया । पराशरः(६।१७) " वैश्यं शूद्रक्रियासक्तं विकर्मस्थं द्विजोत्तमः । हत्वा चान्द्रायणं तस्य त्रिंशद्गाश्चैव दक्षिणा" ॥ इति । द्विजोत्तमः पतितो विप्रः क्षत्रियश्चेति माधवः । अथ धनहर्तृप्रेतक्रियाया अकरणे शंखः

१५ " प्रेतस्य प्रेतकार्याणि अकृत्वा धनहारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेत् " ॥ अज्ञानाद्वृत्तस्थक्षत्रियादिवधे तु संवर्त्तः " निहत्य क्षत्रियं मोहात्त्रिभिः कृच्छ्रैर्विशुध्यति" । तथा " कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरो वैश्यघातकः । कुर्याच्छूद्रवधे विप्रः कृच्छ्रं सांतपनं तथेति" ॥ पराशरः ( ६।१९ )

" शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् । प्राजापत्यद्वयं कृत्वा वृषैकादश दक्षिणेति" ॥

२० एतानि तु प्रायश्चित्तानि क्षत्रियादिहन्तुर्विप्रस्यैव । क्षत्रियादेः सजातीयवधे तु पादपादन्यूनं । वैश्यस्य क्षत्रियवधे द्विगुणं । शूद्रस्य विट्क्षत्रिययोर्वधे द्विगुणं त्रिगुणं चेत्युक्तं प्राक् । व्यभिचारोत्पन्नवधे तु याज्ञवल्क्यः ( प्रा २६२ ) " चान्द्रायणं चरेत्सर्वानवकृष्टान्निहत्य तु " । अवकृष्टा व्यभिचारजाः । हारीतः

" चण्डालश्वपाकप्रभृतिस्त्रीब्राह्मणस्य भवेद्यदि । कारयेद्द्वादश कृच्छ्रं तप्तकृच्छ्रं भवेदिति" । आंगिराः

२५ "सर्वान्त्यजानां गमने भोजने च प्रमापणे[1] । पराकेण विशुद्धिः स्यादित्यांगिरसभाषितम्"॥ इति । एतदज्ञानतो वधे । ज्ञानतस्तु चान्द्रायणमिति विज्ञानेश्वरः । विपरीतमिति माधवः । तदाह लौगाक्षिः

" हनने[2] प्रतिलोमानां शूद्रजानां कथं भवेत् । ज्ञानपूर्वो पराकः स्यादज्ञानादैन्दवं तथेति "॥ चान्द्रायणं द्विविधमष्टधेनुकं त्रिधेनुकं च । पराकोऽपि पंचधेनुकस्त्रिधेनुकश्चेति द्विविधं । तत्र

१ ई-प्रभापणे । २ घ़यर—नं ।

ज्ञाने महतोश्चान्द्रायणपराकयोर्निर्देश । अज्ञानतस्तु अल्पयोरिति ग्रन्थयोरविरोध । यत्तु मासा इत्यनुवृत्तौ ब्रह्मगर्भः ' अतरप्रभवाणा तु सूतादीना चतुर्द्विषडिति" तत्कामतोऽभ्यास विषयम् । तत्र सूतस्य वधाभ्यासे षण्मासा । वैदेहकस्य चत्वार । चडालस्य द्वौ । मागधस्य चत्वार । क्षत्तुरायोगवस्य च द्वौ इति । श्वपाकचडालयोश्चौरयोर्वधे तु । देवल "चौर श्वपाकश्चडालो विप्रेणाभिहतो यदि । अहोरात्रोपितो भूत्वा घृत प्राश्य विशुद्ध्यतीति"॥　५

अथ स्त्रीवधे हारीत " षड्वर्षाणि राजन्ये त्रीणि वैश्ये अध्यर्द्ध शूद्रे क्षत्रियवद्ब्राह्मणीषु वैश्यवत् क्षत्रियासु शूद्रवद्वैश्यासु शूद्रार्द्धमितरासु " । शूद्रार्द्ध नवमासिक । इतरासु शूद्रासु । एतच्च श्रोत्रियपत्न्या गुणवत्या कामतो वधविषय । सपत्नमातृभगिनीदुहितृस्नुषात्मपत्न्या यतिप्रत्यासन्नावधविषय च । सपत्नभगिनीपितृष्वसृमातृष्वसृमातुलानीपितृव्यपत्नीभ्रातृ भार्याश्वश्रूणा वधेऽप्येतान्येव पादोनानि । सपिंडासगोत्राणा वधेऽर्द्धानि । आसामेव श्रोत्रिय　१०
पत्नीत्वादिगुणविशेषे तत्तत्प्रायश्चित्त द्विगुण कल्प्यमिति निर्बंधकृतः । आसामेवाकामतो वधे त्वेतदेवार्द्ध कल्प्य । यत्तु गौतम ( २२।१६–१७ ) " शूद्रे सवत्सर वृषभैकादशाश्च गा दद्यादनात्रेय्या चैवमिति " तद्गुण विप्रमात्रपत्नीवधविषय । यत्तु शातातप " स्त्रीघाती कृच्छ्र षण्मासमिति " तदनैवाकामतो द्रष्टव्य । प्रतिलोमात्प्रसूताना ब्राह्मण्यादीनामकामतो वधे योगीश्वरः ( २६ )　१५

" दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषा प्रमाप्य तु । दृतिं धनुर्बस्तमविं क्रमाद्दद्याद्विशुद्धये " ॥
दृतिश्चर्मकोश । बस्त छाग । अविमेष । व्याघ्रस्तु
" चतुर्णामपि वर्णाना नारीर्हत्वाऽनवस्थित । शलशुक्त्यजमेषाश्च क्रमाद्दद्याद्विशुद्धय " ॥ इति ।
अत्र शलशुक्ती अजापेक्षयाऽधिकमूल्ये ज्ञेये । इत्यादिदाने सुवर्णमपि दक्षिणा देयेत्यपरार्क ।
कामतस्त्वाह ब्रह्मगर्भ　२०

" प्रतिलोमप्रसूताना स्त्रीणा मासावधि स्मृता । अतरप्रभवाणा च सूताना तु चतुर्द्विषट् " ॥
ब्राह्मणीक्षत्रियावैश्याना वधे क्रमेण षट्चतुर्द्विमन्या मासा इत्यर्थ । शूद्राया त्वेक । अतरप्रभावाणामिति व्याख्यातम् । वैश्यावधे किंचिद्देय । ' वैशिकेन किंचिदिति ' गौतमोक्तेः ( २२।२७ ) । " किंचित् जल । शूद्रायामपि वैश्या हत्वा दद्याज्जल नर " इत्यांगिर उक्ते । अपरार्के तु गौतमीये वैश्ये किंचिन्न देयमित्यर्थ　२५
कृत्वा आंगिरसे वैश्या हत्वा जल स्पृशेदिति पठित । सद्व्यभिचारितविप्रादिवधे प्रचेताः ' अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्द षण्मासान्वेति । क्षत्रिया हत्वा षण्मासान्मास त्रयं वेति । वैश्या हत्वा मासत्रय सार्द्धमास वेति । शूद्रा हत्वा सार्द्धमास विंशत्यहानि वेति " । योगीश्वरोऽपि ( प्रा २६९ ) " अप्रदुष्टा स्त्रियं हत्वा शूद्रहत्याव्रत चरेत् " ।

---

१ घई–पाठ, ङ–दुहितृस्नु आत्मपत्न्या–इत्यत्र तन्न्याश्रयम ॥ म्न　२ घयर–वध ।
३ ङ–मतोवधे ।

शूद्रहत्याव्रत योगीश्वरोक्तं षाण्मासिकं । दशधेनुदानं वा । अत्र षाण्मासिकमज्ञानाद्ब्राह्मणीवधे च ज्ञानाद्वैश्यावधे दशधेनुदानमिति विज्ञानेश्वरः । कश्चित्तु स्त्रीवधे प्रयोजकस्य प्रायश्चित्ताभावमभ्युदय चाहापरार्के व्यासः

" अप्रमत्त स्त्रियं हत्वा ब्राम्हणीं वैश्यवच्चरेत् । कामतो द्विगुणं प्रोक्तं प्रदुष्टाया न किंचन ॥

५ " पुण्यान् लोकानवाप्नोति शूद्रगा यस्तथा नयेत् । पतिघ्नीमप्य भर्तृघ्नीं ता[२] हि संकरकारिणीम् "॥

अथ गोवधे मनुः ( ११।१०८-११६ )

" उपपातकसंयुक्तो गोघ्नो मासं यवान्पिबेत् । कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृत ॥

" चतुर्थकालमश्नीयादक्षारलवणं मितं । गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेंद्रिय ॥

" दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्ध्वं रज पिबेत् । शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत् ॥

१० " तिष्ठतीष्वनुतिष्ठेत्तु व्रजतीष्वप्यनुव्रजेत् । आसीनासु तथासीनो नियतो वीतमत्सर ॥

" आतुरामभिषिक्तां वा चौरव्याघ्रादिभिर्भये । पतितां पंकलग्नां वा सर्वप्राणैर्विमोचयेत् ॥

" उष्णे वर्षति शीते वा मारुते वाति वा भृशं । न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तित ॥

" आत्मनो यदि वाऽन्येषां गृहे क्षेत्रेऽथ वा खले । भक्षयतीं न कथयेत्पिबन्तं चैव वत्सक ॥

" अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति । स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥

१५ " वृषभैकादशा गास्तु दद्यात्सुचरितव्रतः । अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेदिति " ॥

यवान् गोमूत्रपक्वान् 'गोमूत्रेण यवागूं कृतामिति' व्यासोक्तेः । कृतवाप सशिखं कृतवपन । 'सशिखं वपनं कृत्वेति' पराशरोक्तेः । अनाद्येन श्लोकेनैकं व्रतमुक्त । द्वितीयेनापरं । अवशिष्टश्लोकैस्तृतीयमिति व्रतत्रय क्रमाच्छूद्रक्षत्रिय विप्रस्वामिकगोवधेषु व्यवस्थाप्य । विप्रस्वामिकगोवध एवानुमन्तग्राहकसाक्षात्कर्तृषु वेति

२० विज्ञानेश्वरादय । उक्तावयवत्रयमेकमेव षाण्मासिक व्रतमिति केचित् । युक्तं चैद । "एतदेव व्रत कुर्युरुपपातकिनो द्विजा" इति (११।११७) मनुनैकत्वेन परामर्शात् । तच्च कामतो गुणवद्विप्रस्वामिकगोवधविषयं । याज्ञवल्क्य (प्रा २६३-२६४)

" पञ्चगव्यं पिबन् गोघ्नो मासमासीत संयत । गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति ॥

"कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वाऽपि समाहित । दद्यात्रिरात्रं वोपोष्य वृषभैकादशास्तु गा"॥ इति।

२५ एतच्च मनूक्तविषय एवाकामतो ज्ञेय । व्याघ्र

"गा चेद्धन्यात्तदा कामात्पणसहस्रं तथा । श्रोत्रियाय दरिद्राय दद्याच्छुद्ध्यर्थमात्मन " इति।

यत्तु शख

" पादं तु शूद्रहत्यायामुदक्यागमने तथा । गोवधे च तथा कुर्यात्परस्त्रीगमने तथेति "।

तच्छ्रोत्रियशूद्रविप्रस्वामिकपिलकर्मोद्युक्तगोव्यपर । अत एव बृहस्पति

१ ड्ड-णा । २ वई-गा अक-ना । हत्वा गाय तु पिबेत ३ ड्ड-मेव ।

"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रता। खड्गादिना घातयित्वा द्विगुणं व्रतमाचरेदिति"॥
विशिष्टायां गवि प्रायश्चित्तविशेषमाह। अत एव प्रचेतसा "स्त्रीगर्भिणीगोगर्भिणीबालवृद्धवधेषु भ्रूणहा भवतीति" ब्रह्महत्याव्रतमतिदिष्ट। अस्मिन्नेव विषये यम
"गोसहस्रं शतं वापि दद्यात्सुचरितव्रत। अविद्यमाने सर्वस्व वेदविद्भ्यो निवेदयेदिति"॥
गोगर्भवधे तु षट्त्रिंशन्मते विशेष उक्त
"पाद उत्पन्नमात्रे तु द्वौ पादौ दृढता गते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्॥
"अङ्गप्रत्यंगसम्पूर्णे गर्भे चेत समन्विते। द्विगुणं गोव्रतं कुर्यादेषा गोघ्नस्य निष्कृति"॥ इति।
बृहस्पतिना "एकवर्षे हते वत्से कृच्छ्रपादो विधीयते।
"अबुद्धिपूर्वं पुस स्याद्द्विपादस्तु द्विहायने। त्रिहायने त्रिपाद स्यात्प्राजापत्यमत परमिति"॥
एतच्च प्रायश्चित्तमल्पत्वादबुद्धिपूर्वकप्रमसबधिगोवधविषय। यमः १०
"काष्ठलोष्टादिभिर्गावः शस्त्रैर्वा निहता यदि। प्रायश्चित्तं कथं तत्र शस्त्रे शस्त्रे विधीयते॥
"काष्ठे सातपनं कुर्यात्प्राजापत्यं तु लोष्टके। तप्तकृच्छ्रं तु पाषाणे शस्त्रे वाऽप्यतिकृच्छ्रक॥
"प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनं। त्रिंशद्गा वृषभं चैकं दद्यात्तेभ्यश्च दक्षिणामिति"॥
संवर्त्तः
"एका चेद्बहुभि काचिद्दैवाद्व्यापादिता यदि। पादं पादं तु हत्यायाश्चरेयुस्ते पृथक्पृथगिति"॥ १५
यादृग्विधगोहत्याया यद्व्रतमुपदिष्टं तस्य पादमित्यर्थ। आपस्तंबः
"पाषाणैर्लकुटैर्वाऽपि शस्त्रेणान्येन वा बलात्। निपातयति ये गास्तु कृत्स्नं कुर्युर्व्रतं हि ते॥
"तथैव बाहुजनोरपार्श्वमीवादिमोटनैरिति"। लकुट दड। स एव
"अगुष्ठमात्रस्थूलस्तु बाहुमात्रप्रमाणत। आर्द्रस्तु सपलाशश्च दड इत्यभिधीयते"॥ इति
पराशरोक्ताधिकप्रमाणेऽप्यपि स्थलविशेषे दोषे विशेषहेतुत्वमस्त्येव। पराशरः (९।४) २०
"दण्डादूर्ध्वं यदन्येन प्रहाराद्यदि घातयेत्। प्रायश्चित्तं तत्र प्रोक्तं द्विगुणं गोवधे चरेदिति"॥
स एव (९।११।१२)
"मूर्छित पतितो वाऽपि दडेनाभिहत स तु। उत्थितस्तु यदा गच्छेत्पञ्च सप्त दशैव वा॥
"ग्रास वा यदि गृह्णीयात्तोयं वाऽपि पिबेद्यदि। पूर्वं व्याध्युपसृष्टश्चेत्प्रायश्चित्तं न विद्यते"॥ इति।
पराशरः (९।४) "रोधनबन्धनयोक्त्राणि घातश्चेति चतुर्विधमिति"। स एव (९।६–१०) २५
"गोवाटे वा गृहे वाऽपि दुर्गेष्वथ समस्थले। नदीष्वथ समुद्रेषु अन्येषु च नदीमुखे॥
"दग्धदेशे मृता गावस्तम्भनाद्रोध उच्यते। योक्त्रदामकडोरैश्च कण्ठाभरणभूषणे॥
"गृहे वाऽपि वने वाऽपि बद्ध स्याद्गौर्मृतो यदि। तदेव बधनं विद्यात्कामाकामकृतं च यत्॥
"हले वा शकटे पक्तौ पृष्ठे वा पीडितो नरै। गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तद्वध॥

१ यदर अङ्घ-विशेषप्रायश्चित्त। २ प्रचेतसां इति ह्य-पाठ। ३ यरनघ-तत्तर्तव्यामित्यर्थ।

"मत्त. प्रमत्त उन्मत्तश्चेतनो वाऽप्यचेतन । कामाकामकृते रोधो दण्डैर्हन्यादथोपलै ॥
" प्रहृता वा मृता वापि तद्धि हेतुर्निपातने " इति । आपस्तंबः
" दमने दामने चैव रोधे सन्नाहयोजने । नस्त सन्नल्पाशैर्वा मृते पादोनमाचरेत् " ॥
दामन मेढिबंधनम् । संवर्त्त
५ "व्यापन्नाना बहूना तु रोधने बधनेऽपि वा । भिषङ्मिथ्योपचारे च द्विगुण गोव्रत चरेदिति " ॥
व्यासः
" औषध लवणे चैव पुण्यार्थमपि भोजनम् । अतिरिक्त न दातव्य काले स्वल्प तु दापयेत् ॥
" अतिरिक्ते विपत्तिश्चेत्कृच्छ्रपादो विधीयत" इति । अपवादमाह स एव
"औषधे तु न दोषोऽस्ति स्वेच्छया पिबतो यदि । अन्यथा दीयमाने तु प्रायश्चित्त न सशय" ॥इति ।
१० एतत्त्वनभिज्ञस्य । अभिज्ञस्य तु न दोष । यथाह संवर्त्तः
" यन्त्रणे गोचिकित्सार्थ मूढगर्भविमोचने । यत्ने कृते विपत्ति स्यान्न स पापेन लिप्यते " ॥
यन्त्रण व्याध्यादिनिर्घातनार्थ सदशादिप्रवेशन । तथा
" दाहच्छेदशिराच्छेदभेदनैरुपकुर्वता । द्विजाना गोहितार्थं तु प्रायश्चित्त न विद्यत" ॥ इति ।
पराशरोऽपि ( ९।४२ )
१५ "ग्रामघाते शरौघेण वेश्मभङ्गनिपातने । अतिवृष्टिहताना च प्रायश्चित्त न विद्यत" ॥ इति । तथा
"कूपखाते च धर्मार्थे गृहदाहे च या मृता । ग्रामदाहे तथा घोरे प्रायश्चित्त न विद्यत" इति ।
एतच्च बधनादिरहितस्यैव कथचिद्दहनादिविषयम् ।
इतरत्र त्वापस्तंबः
" कान्तारेष्वथ दुर्गेषु गृहदाहे खलेषु च । यदि तत्र विपत्ति स्यात्पाद एको विधीयत" ॥ इति ।
२० पराशरः ( ९।३० )
" वहनात्तु विपद्येत अनड्वान् योक्त्रयन्त्रित । उक्त पराशरेणैव ह्येकपाद यथाविधीति " ।
वल्कलादिनाऽन्येन वारिते रोधादौ त्वापस्तंबः
" पादमेक चरेद्रोधे द्वौ पादौ बधने चरेत् । योजने पादहीन स्याच्चरेत्सर्वं निपातन" ॥ इति ।
पराशरः ( ८।१ )
२५ " गवा बधनयोक्त्रेस्तु भवेन्मृत्युरकामत । अकामकृतपापस्य प्राजापत्य विनिर्दिशेत् ॥
" प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् । अनडुत्सहिता गा च दद्याद्विप्राय दक्षिणामिति" ॥
व्यासः ( ८।४९ )
" कर्णाभरणदोषेण विपत्तिर्यदि गोर्भवेत् । गोघ्नोऽर्द्ध तु चरेत्तत्र भूषणार्थं हि तत्स्मृतमिति" ॥

१ ङ-प्राह । २ अई-निपातित इति, ङ-निपातनमिति । ३ अबखघट-ने न-ले । ४ घ-प्राग ।
५ ङ-पद्य--। ६ ङ-दि ।

आपस्तंबेनातिदाहादौ विशेष उक्तः
" अतिदाह्यातिवाहाभ्यां नासिकाछेदने तथा । नदीपर्वतसरोधे मृते पादोनमाचरेत् " ॥
अत्रापवादः पराशरः ( ९।२७ )
"अन्यत्राङ्कनलक्षाभ्यां वाहने मोचनेऽपि वा । सायं सगोपनार्थं च न दुष्येद्रोधबंधने " ॥ इति
स एव ( ९।२९ ) ५
" अतिदाहे चरेत्पादं द्वौ पादौ वाहने चरेत् । नासिक्ये पादहीनं तु चरेत्सर्वं निपातने" ॥ इति।
तथा " नासाभेदनदाहेषु कर्णच्छेदनबंधने । अतिदोहातिदाहाभ्यां कृच्छ्रं चान्द्रायणं चरेदिति " ॥
तत्कपिलत्वाद्यनेकगुणवद्विषयमिति । स्वामिनो गोरुपेक्षणे प्रायश्चित्तमाह व्यासः
" जलौघपल्वले मग्ना मेघविद्युद्धताऽपि वा । श्वभ्रे वा पतिताऽस्माच्छ्वापदेनापि भक्षिता ॥
" प्राजापत्यं चरेत्कृच्छ्रं गोस्वामी व्रतमुत्तमम् । १०
" शीतात्तहता वा स्यादुद्बन्धनमृताऽपि वा । शून्यागारे उपेक्षाया प्राजापत्यं विनिर्दिशेदिति" ॥
स्वामीति पालस्याप्युपलक्षणं । सत्त्वार्थान्तरवैय्यमात्रुपेक्षाया त्वर्द्धं । अत एव विष्णुः
" पल्वलौघमृगव्याघ्रश्वापदादिनिपातने । श्वभ्रप्रपातसर्पाद्यैर्मृते कृच्छ्रार्द्धमाचरेदिति " ॥ अत
एव " अपालनात्तु कृच्छ्रं स्याच्छून्यागारे उपद्रवे " इत्यनेनैवोपेक्षाया प्राजापत्यं उक्तं ।
आपस्तम्बः १५
" अस्थिभंगं गवां कृत्वा लाङ्गूलच्छेदनं तथा । पाटनं दन्तशृङ्गाभ्यां मासार्द्धं तु यवान्पिबेदिति" ॥
एतत्कामतः । अकामतस्तु अंगिराः
" शृङ्गभंगेऽस्थिभंगे वा चर्मनिर्मोचनेऽपि वा । दशरात्रं पिबेद्वत्सं स्वस्थापि यदि गोर्भवेदिति" ॥
पराशरः ( ९।१७।१९ )
" पाषाणेनैव दण्डेन गावो येनाभिघातिताः । शृङ्गभंगे चरेत्पादं द्वौ पादौ नेत्रघातने ॥ २०
"लाङ्गूले पादकृच्छ्रं तु द्वौ पादावस्थिभञ्जने । निपाते चैव कर्णे तु चरेत्सर्वं निपातने " ॥ इति।
स एव
" शृङ्गभंगेऽस्थिभंगे च कटिभंगे तथैव च । यदि जीवति षण्मासात्प्रायश्चित्तं न विद्यते " ॥ इति ।
व्यासः
" यत्नस्य चोपहर्तव्य यावद्रोहेत तद्व्रणं । सम्पूर्णे दक्षिणां दद्यात्ततः पापात्प्रमुच्यते " ॥ २५
पराशरः ( ९।२२ )
" यद्यसम्पूर्णसर्वांगो हीनदेहो भवेत्तदा । गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्दिशेत् " ॥
स एव ( ९।३६ )
" प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयेन् । गवाशनेषु विक्रेता ततः प्राप्नोति किल्बिषमिति " ॥

१ ह–द । २ घ य द – गवां शनेषु ।

कूपवाप्यादिनिक्षेपु पानार्थं वृक्षच्छेदनादिदुर्गमेषु भक्षणार्थं प्रेरणे गोमांसाशनहस्ते गोविक्रये च गोवधपापमित्यर्थः। स एव ( ९।४७ )

" गोवृषाणां विपत्तौ च यावंतः प्रेक्षका जनाः। अनिवारयतां तेषां सर्वेषां पातकं भवेत् "॥

संभावितगोपतनदेशे स्वोपभोगार्थकूपादिखनने दोषमाह स एव ( ९।४१ )

५ " वेश्मद्वारनिवासेषु यो नरः खातुमिच्छति। स्वकार्यगृहखातेषु प्रायश्चित्तं विनिर्दिशेत् "॥

स्वकार्यपदाद्धर्मार्थे न दोषः। तथा स एव ( ९।४० )

" कूपखाते तटाखाते दीर्घखाते तथैव च। अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यत "॥ इति। दीर्घखातं वाप्यादि। अत्र स्वयमेव जलार्थं गते मृते च न दोष इत्याह। स एव (९।३९)

" कूपखाते तटाबंधे नदीबंधे प्रपासु च। पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते "॥

१० स एव ( ९।४२ )

" निशि बंधनिरुद्धेषु सर्पव्याघ्रहतेषु च। अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते "॥

एतच्च हितार्थे विहितरज्जुबंधे ज्ञेयम्। अपरार्के व्यासः

" अथात्र चेद्रवेच्छकां सायं गोर्गोपने मृते। गोमूत्रेण तु संमिश्रं त्रिरात्रं यावकं पिबेदिति"॥

एतन्निषिद्धरज्जुबंधनपरम्। रज्जुविधिनिषेधौ प्रागुक्तौ।

१५ न नारिकेलैर्न च शाणवालैर्न चापि मौंजेन न वज्रशृंखलैः।

" एतैस्तु गावो न निबंधनीया बध्वा तु तिष्ठेत्परशुं गृहीत्वा "॥ अन्यगोवधे विशेषमाह मनुः

"यो यस्य हिंस्याद्द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा। स तस्योत्पादयेत्तुष्टिं राज्ञो दद्याच्च तत्समम्"॥

पराशरः ( ९।३६ )

" प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः "॥

२० ब्राह्मे " आदौ गोपतये दत्वा गोमूल्यं साधु कल्पितमिति "। एतानि च सर्वाणि प्रायश्चित्तानि वृषवधेऽपि भवन्ति। निमित्तवाक्ये गवामनुवादेन तद्गतस्त्रीलिंगस्याविवक्षितत्वात्। दानं तु स्त्रीगवीनामेव। तद्वाक्ये गवां विधेयत्वेन तद्गतस्त्रीत्वस्य विवक्षितत्वात्। ' गोसहस्रं शतं वापी'त्यादौ लिंगविशेषनिर्देशाभावेऽपि स्त्रीगवीनामेव। तासां दुग्धादिद्वारा बहूपकारकत्वात्। अत एव गौश्चाश्वश्चाश्वतरश्चेत्यत्र लिंगविशेषानिर्देशेऽपि तस्य द्वादशशतं दक्षिणेति

२५ तच्छब्देनाऽश्वादीस्तिरस्कृत्य गोपरामर्श इव स्त्रिया एवास्याग्रहणे बहूपारकत्वमेव निदानमिति भाति। अन्यथा तत्र वृषाणामपि दानमापद्येतेति दिक्। याज्ञवल्क्यः (प्रा. २७१)

" गजे नीलवृषाः पंच शुके वत्सो द्विहायनः। खराजमेषेषु वृषो देयः क्रौंचे त्रिहायनः"॥

मनुः ( ११।१३६ )

" वामो दद्याद्वयं हत्वा पंच नीलान् वृषान् गजं। अजमेषावनड्वाहं खरं हत्वैकहायनमिति "॥

---

१ घयर दद्याते। २ घ गोपिने, इ—गोपिने।

एतानि प्रायश्चित्तानि धनिकविषयाणि । निर्द्धनस्य तु जाबालिः
" हस्तिनं तुरगं हत्वा महिषं गां तथैव च । कृच्छ्रं सांतपनं कुर्याद्गोभूकन्याऽनृतेषु च " ॥
विष्णुः
" हस्तिनं तुरगं हत्वा महिषोष्ट्रौ कपिं तथा । एषु सर्वेषु कुर्वीत सप्तरात्रमभोजनं " ॥
इदमभ्यासविषयम् । अस्मिन्नेव विषये		५
" सिंहव्याघ्रतुरगांश्च मृगखड्गरुरुद्विपान् । हत्वा सांतपनं कुर्याद्गोभूकन्यानृतेषु च " ॥
सुमंतुः " वानरसिंहमार्जारमण्डूकाश्ववधे प्राजापत्यमिति " ॥ पराशरः ( ६।९ )
" हत्वा मूषकमार्जारसर्पाजगरकुण्डुभान् । कृशरं भोजयेद्विप्रान् लोहदंडं च दक्षिणेति " ॥
विष्णुः " हत्वा मूषकमार्जारनकुलमण्डूकडुण्डुभाजगराणामन्यतमं कृसरान्नं भोजयित्वा लोहदंडदक्षिणां दद्यात् " । यत्तु शंखः		१०
" हत्वा द्विजस्तथा सर्पो बिलेशयजलेशयौ । सप्तरात्रं तथा कुर्याद्व्रतं ब्रह्मवधे तु यदिति "
तत्कामकृते । यच्चोशनाः " खरमार्जारमण्डूकसर्पाजगरमूषकान् । हत्वा कृच्छ्रं द्वादशरात्रं चरेत्किंचिद्दद्यादिति " तदकामाभ्यासे । विष्णुः ( ५०-३० ) " श्वानं हत्वा त्रिरात्रं मुपवसेदिति " । यत्तु माधवीये पैठीनसिः " काकोलूककङ्कलासकर्कखरवृकशृगालभासबर्हिणमूषकचक्रवाकहंसप्लवनकुलमण्डूकबिडालश्ववध एतेषामेकैकस्मिन् शूद्रवधवद्विहित-		१५
मिति " । तत्कामतोऽभ्यासविषयम् । मनुः ( ११।१३६,१३७ )
" हत्वा हंसं बलाकां च बकं बर्हिणमेव च । वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गां ॥
" क्रव्यादांस्तु मृगान्हत्वा धेनुं दद्यात्पयस्विनीम् । अक्रव्यादो वत्सतरीमुष्ट्रं हत्वा तु कृष्णलं " ॥
स एव ( ११।१३३ )
" अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तम । पलालभारकं षण्डे सैसकं चैव माषकं ॥		२०
" तित्तिरिं तु तिलद्रोणं गवादीनामशक्नुवन् । दानं दातुं चरेत्कृच्छ्रमेकैकस्य विशुद्धये " ॥
प्रत्येकं प्राजापत्यं कुर्यादिति केचित् । विज्ञानेश्वरस्तु कृच्छ्रपदं तपोमात्रपरं । तपांसि च । " संवत्सरं षण्मासाश्चत्वारस्त्रयो द्वावेकश्चतुर्विंशत्यहोद्वादशाहं षडहस्त्र्यहोहोरात्रा इति कालं । एतान्येवानादेशे विकल्पेन क्रियेरन्नेनसि गुरूणि गुरूणि लघूनि लघूनीति " गौत
मोक्तानि (१८।१९) तानि दानतारतम्येन व्यवस्थाप्यानीत्याह । याज्ञवल्क्यः (प्रा २७३)		२५
' उरगेष्वायसो दंडः पंडके त्रपुसीसकम् । कोले घृतघटो देयं उष्ट्रे गुंजा हयेंऽशुकम् " ॥
कोलः शूकरः । पंडकश्च मृगपक्षिसमभिव्याहारात्स एव । न तु गोविप्रादिः । तत्र तु तद्वध निमित्तमेव लघुप्रायश्चित्तमिति विज्ञानेश्वरः । मम तु प्रतिभाति । यथा गोब्राह्मणवधनिषेधस्य जात्यवच्छेदेनैव प्रवृत्तेन तज्जातीयषंडवधे इदं प्रायश्चित्तं तथा मृगादिविशेषजाति

१ घय अनेषु च र-स्तषु । २ ह्र-भा । ३ ह्र-आ । ४ ह्र-च ।

पुरस्कारेणापि प्रायश्चित्तस्योक्तत्वात्तत्रापि न प्रवर्त्तते । अतो यत्र जातिविशेषपुरस्कारेण प्रायश्चित्तं नोक्तं तज्जातीयषड्कवध एवैतत्प्रायश्चित्तमिति माधवीये कश्यपः । " मृगमहिषवराहकुञ्जरगाडशशरभतरक्षुवानरसिंहव्याघ्रवृषभकृसशल्यकादीनामन्येषां च वधेऽहोरात्रोपोषितस्त्र्यहं घृतं दद्यात् " । व्यासः " सर्वांश्च प्राणिनः स्थूलान्मण्डूकनकुले

५ त्र्यहमिति " । इदमज्ञानतः सकृद्वधे । ज्ञानतस्तु याज्ञवल्क्यः ( प्रा २७० ) " मार्जारगोधानकुलमण्डूकांश्च पतत्रिणः । हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् " ॥ विष्णुः ( ५०-३२ ) " गोधोलूककाकचापकावधे त्रिरात्रमुपवसेत् " । व्यासः " शूकरोष्ट्रखरान्हत्वा त्र्यहमेतद्व्रतं चरेत् " । यत्तु वसिष्ठः ( २१।२४ ) " श्वमार्जारमण्डूकनकुलसर्पदर्दुरमूषकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत् " इति तदकामतोऽभ्यासविषयं ।

१० दहरोऽल्पमूषकः । यत्तु मनुः ( ११।१३१ ) " मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च । श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् " ॥ शूद्रहत्याव्रतं षाण्मासिकं । "पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत् । उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत्"॥

पराशरः ( १३२ )

१५ "वृककाककपोतानां सारीतित्तिरिघातकः । अन्तर्जले उभे सन्ध्ये प्राणायामेन शुध्यति" । वृकः पक्षिविशेषः । सन्ध्ये इत्यत्यन्तसंयोगे द्वितीया । अतो यावद्भिः प्राणायामैः सन्ध्याद्वयं समाप्यते तावत् कुर्यात् । " प्राणायामेनेत्येकवचनमविवक्षितं " इति माधवः । इदमकामतः सकृद्वधे स एव " कारण्डवचकोराणां पिंगलाकुररस्य च । भारद्वाजादिकं हत्वा शिवं पूज्य विशुध्यति" ॥

पराशरः ( ६।८ )

२० " भारद्वाजचाषभासांश्च पारावतकपिंजलौ । पक्षिणां चैव सर्वेषामहोरात्रमभोजनम् " ॥

यत्तु संवर्तः

" चक्रवाकं तथा क्रौंचं तित्तिरिं शुकसारिके । गृध्रं श्येनमुलूकं च तथा पारावतानपि ॥

" टिट्टिभं जालपादं च मद्गुं कुक्कुटमेव च । एवं पक्षिषु सर्वेषु दिनमेकमभोजनम् " ॥

यदपि पराशरः ( ६।२ )

२५ " क्रौंचसारसहंसांश्च चक्रवाकं च कुक्कुटं । जालपादं च शरभमहोरात्रेण शुध्यति " ॥

यदपि स एव ( ६।१ )

"गृध्रश्येनशशादीनामुलूकस्य च घातकः । अपक्वाशी दिनं तिष्ठेत्त्रिकालं मारुताशन" ॥ इति तत्त्वामकृतविषयं । यत्तु संवर्तः

"हंसं बकं बलाकां च श्वाविधं बर्हिणं तथा। सारसं चाषभासं च हत्वा त्रीन्दिवसान् क्षिपेदिति"॥

३० तदभ्यासपरमिति माधवः । यत्त्वंगिराः

"काके भासे च गृध्रे च टिट्टिभे खजरीटके। यथा गवि तथा हत्वा भगवानगिराऽब्रवीदिति" ॥
तत्कामतोऽत्यताभ्यासविषय । अतिधनिकस्य तित्तिर्यादौ विशेषमाह मनुः ( ११।१३४ )
"घृतकुभ वराहं तु तिलद्रोण तु तित्तिर । शुक द्विहायन वत्स क्रौंच हत्वा त्रिहायनम्" ॥
धनिकस्य कामतो बलाकादिवधे माधवीये कश्यपः "बकबलाकाहससारसकारडव चक्रवाककुररगृध्रश्येनखजरीटटिट्टिभोलूकशुकसारिकातित्तिरमयूरमूषकमेननक्कलविंककपोत पारावतादीना वधे प्रायश्चित्तमहोरात्रोषित सर्वबीजानि च दद्यादिति" । ५
धनिकस्याकामतो वधाभ्यासे तु याज्ञवल्क्यः ( प्रा २७२ )
"हसश्येनकपिक्रव्याज्जलस्थलशिखण्डिन । भास हत्वा तु दद्याद्गामक्रव्यादस्तु वत्सिका" ॥
जलशब्देन बकादय ।स्थलशब्देन बलाकादय इति मिताक्षरायां । याज्ञवल्क्य (प्रा २७९)
"किंचित्सास्थिवधे देय प्राणायामस्त्वनस्थिक" इति । किंचिदष्टमुष्टिधान्य । १०
मनुः ( ११।४० )
"अस्थन्वता तु सत्त्वाना सहस्रस्य प्रमापणे। पूर्णे वा नस्यनस्ना तु शूद्रहत्याव्रत चरेदिति"॥
शूद्रहत्याव्रत षाण्मासिकम् ।
अथात्मघाते यमः ( २ )
"जलाग्न्युद्बन्धनभ्रष्ट प्रव्रज्याऽनाशकच्युता । विषप्रपतनप्राय शस्त्राघातहताश्च ये ॥ १५
"न वैते प्रत्यवसिता सर्वलोकबहिष्कृता । चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन चेति" ॥
आत्मघातिपुत्रादिर्मृतजातीयवधप्रायश्चित्तसमुचितमेतत्कुर्यात् । मरणमध्यवस्य निवृत्ते तु वसिष्ठः ( २३।१८-१९ ) "आत्महननाध्यवसाये त्रिरात्र जीवन्नात्मत्यागी कृच्छ्र द्वादशरात्र चरेत्त्रिरात्र चोपवसेदिति" । एतदल्पाध्यवसाये । अतिपातादिबह्वध्यवसाये तु
पराशरः ( १२।५-६ ) २०
"जलाग्निपतने चैव प्रव्रज्यानाशनेषु च । प्रत्यावसितवर्णाना कथ शुद्धिर्विधीयते ॥
"प्राजापत्यद्वयेनैव तीर्थाभिगमनेन च । वृषैकादशदानेन वर्णा शुध्यंति ते त्रय ॥
"ब्राह्मणस्य प्रवक्ष्यामि वन गत्वा चतुष्पथे । सशिख वपन कृत्वा प्राजापत्यद्वयं चरेत् ॥
"गोद्वय दक्षिणा दद्याच्छुद्धि पाराशरोऽब्रवीत् । मुच्यते तेन पापेन ब्राह्मणत्व च गच्छतीति" ॥
अध्यवसायावृत्तौ त्वगिराः २५
"य प्रत्यवसितो विप्र प्रव्रज्याग्निजलादिभि । अनाशकनिवृत्तस्तु गृहस्थत्व चिकीर्षति ॥
"चारयेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि तु ।जातकर्मादिभि प्रोक्तै पुन सस्कारमर्हति"॥
वैध मरणमध्यवसाय त्यजता तु पराशरः
"जलाग्निपतने चैव प्रव्रज्यानशने तथा । अभ्यस्य निवृत्ताना प्रायश्चित्त कथं भवेत् ॥
"ब्राह्मणाना प्रसादेन तीर्थानुसरणेन च । गवा च शतदानेन वर्णा शुद्ध्यति ते त्रय ॥ ३०

" ब्राह्मणस्य प्रवक्ष्यामि गत्वाऽरण्यं चतुष्पथं । सशिखं वपनं कृत्वा त्रिसंध्यमवगाहनं ॥
" गायत्र्यष्टसहस्रं तु जपेच्चैव दिनेदिने । मुच्यते सर्वपापेभ्यो ब्राह्मणत्वं च गच्छति ॥
" भिक्षार्थी प्रविशेद्ग्रामं गृहान्सप्त वने वसन् । धौतभिक्षां समश्नीयाद्वत्सरेण विशुध्यतीति " ॥
अनुगमनाग्निवृत्तौ त्वापस्तंबः

५　" चितिभ्रष्टा तु या नारी मोहात्प्रचलिता ततः । प्राजापत्येन शुध्येत तस्माद्वै पापकर्मणः " ॥इति ।
आत्मघातिप्रेतक्रियायां तु वसिष्ठ ( २३।१६ )
" य आत्मघातिनः कुर्यात्स्नेहात्प्रेतक्रिया नरः । स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम् " ॥
उशनाः " प्रायोऽनाशकशस्त्राग्निविषोद्बंधतृणोदकैः । काष्ठाद्यैश्चात्मनो हंतुर्नृपब्रह्मसरीसृपैः ॥
" शृंगिदंष्ट्रिश्वचांडालविद्युताऽभिहतस्य च । तथा सकरजातस्य नारीचोदकवन्हय ॥

१०　" तत्स्पर्शे यदि वाऽक्रोशे दिनमेकमभोजनम् । अज्ञानाद्दहनाद्यो तु कृच्छ्रं सांतपनः स्मृतः ॥
"बुद्धिपूर्वं पुनस्तस्य कृच्छ्रो गोमूत्रयावकः । तप्तकृच्छ्रोऽपि वाऽशक्तौ मासभिक्षाशनोऽपि वा॥
" कृत्वा च वहनादीनि प्रायश्चित्तमकुर्वता । तप्तकृच्छ्रद्वयाच्छुद्धिरेक एवानुयायिना " ॥
आत्मघातनिमित्तं प्रायश्चित्तमकुर्वतामात्मघातिपुत्रादीनामित्यर्थः । च्यवनः " आत्मघातक-
स्पर्शनवहनदहने तप्तकृच्छ्रं चरेद्विंशतिगावो दक्षिणा ब्राह्मणेभ्यिति "। पराशरः ( ४।१० )

१५　" चांडालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि । आहिताग्निर्हतो विप्रो विषेणापि हतोऽपि वा ॥
" ऐकिकाग्निना स दग्धव्यो मंत्रसंस्कारवर्जितः । स्पृष्टा द्रष्टा च वोढा च सपिंडेषु च तस्य यः ॥
" प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनम् ।
" दग्ध्वाऽस्थीनि पुनर्गृह्य क्षीरे प्रक्षालयेद्बुधः । साग्निभिश्च पुनर्दाहः स्वमंत्रेण पृथक् पृथक् "॥
एतच्च बुद्धिपूर्वक आत्महनने " प्रायोऽनाशकशस्त्राग्निविषोद्बंधनप्रपतनैश्चेच्छतामिति "

२०　गौतमोक्तेः ( १४।११ )। अथापमृत्यौ तु भविष्यत्पुराणे
" चंडालोत्राह्मणाग्निपशुदंष्ट्रिसरीसृपैः । प्रमादान्मरणे चांद्रं तप्तकृच्छ्रमथापि वा " ॥
स्मृत्यर्थसारे तु " तप्तकृच्छ्रद्वयं पंचपंचदशकृच्छ्राणि वा कृत्वा दाहादि कार्यमिति " ॥
अंगिराः
" अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं प्रकर्तव्यं कर्त्तव्या चोदकक्रियेति ॥

२५　" उर्ध्वोच्छिष्टे ह्यधोच्छिष्टेोभयोच्छिष्टे तथैव च "। अस्पृश्यस्पर्शने खट्वाग्निमरणे।
पराशरांगिरसौ
" उर्ध्वोच्छिष्टे ह्यधोच्छिष्ट अंतरिक्षे मृतिर्यदि । कृच्छ्रत्रयं प्रकुर्वीत आशौचिमरणेऽपि च " ॥
तथा
" उर्ध्वोच्छिष्टे ह्यधोच्छिष्टेोभयोच्छिष्टे तथैव च । अस्पृश्यस्पर्शमरणे खट्वादौ मरणे तथा ॥

" श्वानक्रव्यादसंस्पर्शे कृमिकीटोद्भवेऽपि च । एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत् ॥
" कृच्छ्रास्त्रिपट्पंचदशान् चान्द्रायणमथापि वेति " । शक्त्या कृच्छ्रादिव्यवस्था ।
अथ पर्युषितशवदाहे गालवः
" दिवा वा यदि वा रात्रौ शवस्तिष्ठति कर्हिचित् । तत्पर्युषितमित्याहुर्दहने तस्य का गतिः ॥
" पंचगव्येन सस्नाप्य प्राजपत्यत्रयं चरेत् " । द्विजस्य शूद्रप्रेतानुगमने विष्णुः (२२।६२) ५
" द्विजः शूद्रप्रेतानुगमनं कृत्वा स्रवंतीमासाद्य तन्निमग्नस्त्रिरघमर्षणं कृत्वोत्तीर्य्य गायत्र्यष्टसहस्रं जपादिति " ॥ अथ सुरापाने । सुरा पैष्टयेव ।
"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति"
मनूक्तेः ( ११।९३ ) ।
" गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । यथैवैका तथैवान्या न पातव्या द्विजोत्तमैरिति " १०
तु तदुक्तिः ( ११।९४ ) । समदोषतयेतरानिंदार्था । अत एव भविष्यत्पुराणे
" सुरा तु पैष्टी विज्ञेया न तस्यास्त्वितरे समे " इति । पुलस्त्योऽपि
" पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवं । मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ॥
" समानानि विजानीयान्मद्यान्येकादशैव तु । द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतमिति " ॥
द्वादशापि मद्यानि विप्रस्य निषिद्धानि । " नित्यं मद्यं ब्राह्मणो वर्जयेदिति " १५
स्मृतेः । सुरा तु क्षत्रियविशोरपि । पूर्वोक्तमनूक्तेः । तत्र सुरापाने प्रायश्चित्तमाह याज्ञवल्क्यः ( प्रा. २५४ ) " बालवासा जटी वाऽपि ब्रह्महत्याव्रतं चरेदिति " । तच्च द्वादशाब्दं । प्रायश्चित्तांतरमाह स एव ( प्रा २५४ ) " पिण्याकं वा कणान् वाऽपि भक्षयेत्तु समा निशि " । समामब्दं । " कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशीति "
मनूक्तेः ( ११।९२ ) । व्यवहारार्थमेव तत्र तु परलोकायेति चापरार्के । केचित्तु २०
' भक्षयेत्त्रिसमा " इति पेठु । मानवं तु व्रतांतरमेवेत्याहु । परे समा निशीति बहुवचनात् पेठु । तत्र कपिंजलन्यायेनाऽब्दत्रयं भवति । मानवीये एकवचनं तु जात्यभिप्रायेणेत्याहु । इदं तु छर्दने सति ज्ञेयं ।
" एतदेव व्रतं कुर्यान्मद्यपश्छर्दने कृतं । पंचगव्यं तु तस्योक्तं पवित्रं कायशोधनमिति "
व्यासोक्तेः । गौडीमाध्व्यो सकृत्पानेऽप्येतदेवेति विज्ञानेश्वरः । यत्तु पंचमहापापिनं २५
उक्त्वा आपस्तंबः ( १।२७।११ ) " चतुर्थकालमितभोजनो योऽभ्युपेयात्स्थानासनाभ्यां विहरंस्त्रिभिर्वर्षैः पापमपनुदतीति " । यच्च यमः
"बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः । समत्वं ब्राह्मणैर्गच्छेदित्येषा वैदिकी श्रुतिः ॥
"भूमिप्रदानं यः कुर्यात्सुरां पीत्वा द्विजोत्तमः । पुनर्न च पिबेत्तां तु संस्कृतः स विशुध्यतीति "॥
तानि याज्ञवल्कीयत्रैवार्षिकसमानविषयाणीति विज्ञानेश्वरः । यत्तु भविष्ये ३०

१ धन-अपरार्के । २ अधिकरण ।

"अकामत सुरा पीत्वा पैष्टीं सत्कुलनन्दन । कृच्छ्रातिकृच्छ्रौ कृत्वा वै पुन संस्कारत शुचि ॥
"कणान्वा भक्षयेदब्द पिण्याकं वा सकृन्निशीति" तत्सुरामात्रापनेयरोगार्थपानविषय । तथा च तत्रैव
"तयाऽस्मिन्नेवविषये वासिष्ठ परिकीर्त्तितम् । यदि रोगैर्भवेद्दुष्टो नेतरस्य कदाचन ॥
५ " कृच्छ्रश्चात्र सुरश्रेष्ठ तस्यैव उदाहृत " । यत्तु मनुः ( ११।१४६ )
" अज्ञानाद्वारुणीं पीत्वा सम्कारेणैव शुध्यति । मतिपूर्वमनिर्देश्य प्राणान्तिकमिति स्थितिरिति" तत्र वारुणीपद पैष्टीपरम् । उत्तरार्द्धे प्राणान्तिकनिर्देशात् । पूर्वार्द्धे तु रोगिपरमेव । अत्र सम्कारमात्रमेव प्रायश्चित्तमिति केचित् । तन्न
"अज्ञानाद्वारुणीं पीत्वा सम्कारेणैव शुद्ध्यति । तप्तकृच्छ्रान्वितेनेह केवलेन विशुद्ध्यतीति" ॥
१० भविष्योक्ते । अज्ञानादपपार्थमत एव बृहस्पतिः
"गौडी माध्वी तथा पैष्टीं पीत्वा विप्र समाचरेत् । तप्तकृच्छ्र पराक च चान्द्रायणमनुक्रमादिति" ।
ज्ञानादज्ञानतश्च पानसादिमद्यपानाभ्यासे क्रमाद्द्वयोरेतयोरावृत्तिमाह यमः
" गोमूत्रवह्निहित कल्पश्चान्द्रायणमथापि वा । अनभ्यासे तयोर्भूयस्तस्तु शुद्धिमवाप्नुयात्" ॥
कामत सकृत्पाने पराशर ( १२।६७ ) "मद्यपश्च द्विज कुर्यान्नदीं गत्वा समुद्रगा ।
१५ "चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राम्हणभोजनम् । अनडुत्सहिता गा च दद्याद्विप्रेषु दक्षिणाम् " ॥
इद च गवाधिक्य शक्त प्रति । अज्ञानत सकृत्पाने तु विष्णुबृहस्पती
" पीत्वा प्रमादतो मद्यमतिकृच्छ्र चरेद्द्विज । कारयेत्तस्य सस्कार भक्त्या विप्राश्च भोजयेत् " ॥
पानसादीन्येकादशमद्यान्युक्त्वा अपर्युषि तत्तत्पाने प्रायश्चित्तमाह पराशरः
"द्राक्षेक्षुटक खर्जूर पानसादेश्च यो रस । सद्यो जातस्तु त पीत्वा त्र्यहाच्छुध्येद्द्विजोत्तम " ।
२० इद तु निरान्न द्राक्षादिरसाना मादकत्व एव द्रष्टव्यम् । अन्यथा सद्यो जातेक्षुरसादावपि स्यात् । सुरासम्पृष्टद्रव्यस्याज्ञानतो भक्षणे आह मनुः । अज्ञानात्प्राश्यविधिरुक्त संस्कारमयूखे । यत्तु सुमंतु " ब्राम्हणस्य सुरापस्य षण्मासानुद्धृतसमुद्रोदकस्नान सावित्र्यष्ट सहस्र जुहुयात्प्रत्यह निराहारमुपवासस्तप्तकृच्छ्रेण पूतो भवतीति ' तत्रैवार्षिकविषयम् ।
कामत सकृत्सुरापाने याज्ञवल्क्यः ( प्रा २९३ )
२५ " सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् । सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमृच्छतीति " ॥
यत्तु वसिष्ठः ( २०।२२ ) "अभ्यासे तु सुराया अग्निवर्णां सुरा पिबेदिति " तदकामपर ।
गौडीमाध्व्योर्मत्याऽभ्यासेऽमत्या वाऽत्यन्ताभ्यासे तु माधवीये व्यासः
"मत्या मद्यममत्या वा पुन पीत्वा द्विजोत्तम । ततोऽग्निवर्णां तां पीत्वा मृत शुद्धेत्स किल्बिषात् ' ॥

१ घ–रोगै । २ घर–प्रमया ।

अथाभक्ष्यभक्षणे विष्णुः
" अभोज्यानामपेयानामभक्ष्याणां च भक्षणे। कृच्छ्रपादं विशुद्ध्यर्थं चरेत् क्षिप्रशोधनम्" ॥
इदं त्वज्ञानात्सकृद्भक्षणे। ज्ञानतस्तु संवर्तः
" अभोज्यभोजनं कृत्वा ब्रह्मक्षत्रविशां गणां। गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति " ॥
अभ्यासे तु बृहस्पतिः
" अलेह्यानामपेयानामभक्ष्याणां च भक्षणे। रेतोमूत्रपुरीषाणां शुद्ध्यै चान्द्रायणं चरेदिति " ॥
शिष्टविगीतमात्रे तमालभगादिद्रव्यविशेषे तु अपरार्के भरद्वाजः
"शिष्टा नाश्नन्ति यत्किंचिद्दलमूलफलादिकं। न तद्भोज्यं द्विजातीनां भुक्त्वा चोपवसेदहरिति"॥
अथ विशेषतः तत्र जातितो दुष्टे पलाण्ड्वादौ अज्ञानात्सकृद्भुक्ते बृहस्पतिः
"लशुनं कवकं चैव पलाण्डुं गृञ्जनं तथा। चत्वार्य्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद्द्विज" इति ॥ १०
ज्ञानतस्तु याज्ञवल्क्यः ( आ. १७६ )
" पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटं। लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् " ॥
गृञ्जनं लशुनतुल्यं कन्द इति विज्ञानेश्वरः। यदीयं चूर्णं गायकाः कण्ठशुद्ध्यै विटाश्च मदार्थमश्नन्ति। स पत्रविशेष इति माधवः।
" विषदिग्धेन शल्येन यो मृगः परिहन्यते। अभक्ष्यं तस्य तन्मांसं तद्धि गृञ्जनमिष्यते "॥ १५
इत्यपरार्कः।
यत्तु हेमाद्रिमाधवौ गाजराख्यं मूलमिति तन्न। हेमाद्रावेव " गृञ्जनं चुक्रिका शुक्रं गाजरं पोतिका तथेति ' ब्राह्मे पृथङ्निर्देशात्। शातातपः " लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनीमि [1] त्युक्त्वा " उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुरिति "। चान्द्रायणानुवृत्तौ विष्णुः ( ५१।३-४ ) " लशुनपलाण्डुगृञ्जनविड्वराहग्रामकुक्कुटनरगोमांस २० भक्षणे सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यादिति"। यत्तु मनुः ( ५।१९ )
" छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटं। पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥
" अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्। यतिचान्द्रायणं वाऽपि शेषेषूपवसेदहरिति"॥
अत्र कामतोऽभ्यासे पतनं। अज्ञानत औषधार्थं सकृद्भक्षणे सांतपनं। औषधार्थमेव ज्ञानतः सकृदज्ञानतोऽभ्यासे च चान्द्रं। पलाण्ड्वाद्येकनाश्यरोगे तु नैव दोषः। तथा २५
[illegible] "। चतुर्विंशतिमते।
[illegible] ... यणव्रतमिति "।
तृणराजस्ताल। ऊली पलाण्डु। पराशरः ( ११।१० )
" पीयूषं श्वेतलशुनं वृन्ताकं फलगृञ्जनं। पलाण्डुं वृक्षनिर्यासं देवस्वं कवकानि च ॥
" उष्ट्रीक्षीरमविक्षीरमज्ञानाद्भुञ्जते द्विजः। त्रिरात्रोपवासेन पञ्चगव्येन शुद्ध्यति " ॥
सुमन्तुः " लशुनपलाण्डुगृञ्जनभक्षणे। सावित्र्यष्टसहस्रेण मूर्ध्निसंपातान्नयेदिति " । ३०

१ ह्र—घम। २ ग्र—कर्च्छ ह्र—कवच।

एतन्मुखप्रवेशमात्रपरं । बृहस्पतिः

" अलेह्यानामपेयानामभक्ष्याणां च भक्षणे । रेतोमूत्रपुरीषाणां शुद्ध्यै चांद्रायणं चरेदिति " ॥

**मिताक्षरायां स्मृतिः**

" नालिकाशणछत्राककुसुंभालाबुविड्भवान् । कुंभीककेबु वृंताककोविदारांश्च वर्जयेत् ॥

१ " तथा कालप्ररूढानि पुष्पाणि न फलानि च । विकारवच्च यत्किंचित्प्रयत्नेन विवर्जयेदिति " ॥

तथा " वटप्लक्षाश्वत्थदधित्थनीपकदंबमातुलिंगफलानि वर्जयेत् " । यमः

" तंडुलीयककुंभीकश्वश्वनप्रभवांस्तथा । एतेषां भक्षणं कृत्वा प्राजापत्यव्रतं चरेदिति " ॥

कामतोऽभ्यासे तु वृद्धयमः

" नालिकां नालिकेरीं च श्लेष्मातकफलानि च । खट्वा वार्त्ताककुंभीकश्वश्वनप्रभवांस्तथा ॥

१० " भूतृणं शिग्रुकं चैव कुसुंभं कवकानि च । एतेषां भक्षणं कृत्वा चरेच्चांद्रायणं द्विजः " ॥

द्विजपदाच्छूद्रादेरनिषेधः । आपस्तंबः

" भक्षयेद्यदि नीलीं तु प्रमादाद्ब्राह्मणः क्वचित् । चांद्रायणेन शुद्धिः स्यादापस्तंबोऽब्रवीन्मुनिरिति " ॥

**षट्त्रिंशन्मते**

" शणपुष्पं शाल्मलं च करनिर्मथितं दधि । बहिर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशं " ॥ कौर्मे

१५ " अलाबुं शिग्रुकं चैव जग्ध्वाऽप्येतद्व्रतं चरेत् । औदुंबरं च कामेन तप्तकृच्छ्रेण शुद्ध्यतीति " ॥

शंखः " माहिषं गव्यमानं च भक्ष्यं क्षीरेषु निर्दिशेत् । भुक्त्वा परस्य च क्षीरं मासं कुर्याद्व्रतं बुधः ॥

" अनिर्दशाहे गोक्षीरं माहिषं चाऽजमेव च । गोश्च क्षीरं विवत्सायाः संधिन्याश्च तथा पयः ॥

" संधिन्यमेध्यभक्षाया भुक्त्वा पक्षं व्रतं चरेत् ॥

" क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रव्रतं कुर्याद्यतेतत्परिकीर्तितमिति " ॥

२० अनभ्यासे तु संवर्त्तः

" अवत्सैकशफा स्त्रीणां क्षीरं प्राश्य द्विजोत्तमः । अनिर्दशाया गोश्चैव त्रिरात्रं यावकं पिबेदिति " ॥

अकामतोऽनभ्यासे तु 'शेषेषूपवसेदहरिति' (५।२०) मनूक्त उपवासः । उष्ट्र्यादिक्षीरे तु शातातपः

" *उष्ट्रीक्षीरपाने मानुषीक्षीरपाने गुरुतल्पगमने तप्तकृच्छ्रं च । आममांसघृतसंधिन्यनिर्दशाया*

गोः क्षीरप्राशने वृथामांसभक्षणेण च प्राजापत्यं " । कपिलाक्षीरपाने विशेषमाहापस्तंबः

२५ "*क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथ वा पुनः । यः पिबेत्कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्*" ॥

**भविष्यपुराणे**

" कापिलं यः पिबेच्छूद्रो नरके स विपच्यते । हुतशेषं पिबेद्विप्रो विप्रः स्यादन्यथा पशुः " ॥

अन्यथा हुतशेषापाने तत्र शूद्रस्य कपिलाक्षीरपाने च्यवनेन ब्रजहेति तद्रूप्या-

तिदेशः कृतस्तेन तस्य तत्र नवाब्दं इतरयोश्चांद्रायणमनादिष्टत्वात् । ब्रह्मपुराणे

३० " घृतात्फेनं घृतान्मांडं पीयूषमथचार्द्धगोः । दधिक्षीरमथाज्यं च दुष्टायाश्चैव गोः पयः ॥

१ ङ-त्य. २ ई-दधि इव धयर दुग्ध ।

" अनिर्दशायाश्च तथा संधिन्याश्च तथैव च । सगुड मरिचाक्त च तथा पर्युषित दधि ॥
" जीर्णतक्रमपेय तु नष्टस्वाद च फेनवत् । प्रमादाद्भक्षितैरेभिर्व्रते पक्षव्रत चरेदिति " ॥
आर्द्रगो सद्यप्रसूताया । दुष्टाया व्याघ्यादिना । अथ मासभक्षणे मनुः ( ५।४८ )
" नाकृत्वा प्राणिना हिंसा मासमुत्पाद्यते कचित् । न च प्राणिवध स्वर्ग्यस्तस्मान्मास न भक्षयेत् "॥
तत्र विशेषानुक्तावकामत सकृद्भक्षणे " शेषेषूपवसेदहरिति " मनूक्त ( ५।२० ) । ५
कामतस्तु अनुपाकृतमासानीत्याद्युपक्रम्य ' मत्स्याश्च कामतो जग्ध्वा सोपवासस्त्र्यह वसेदिति ' ।
अकामाभ्यासे मनुः " भुक्त्वा मासमभक्ष्य च सप्तरात्र यवान्पिबेदिति " । कामतोऽभ्यासे
विष्णुः " अनर्चित वृथामास भुक्त्वा मास पयसा वर्तेतेति " । नरमासादिभक्षणे उशनाः
" नरमास श्वमास च गोमास चाश्वमेव च । भुक्त्वा पञ्चनखाना च महासातपन चरेत् " ॥
स्मृत्यंतरे १०
" जग्ध्वा मास नराणा च विड्वराह खर तथा । गवाश्वकुञ्जरोष्ट्राणा सर्व पाञ्चनख तथा ॥
" क्रव्याद कुक्कुट ग्राम्य कुर्यात्संवत्सर व्रतम् " । यमः
मासमूत्रपुरीषाणि प्राश्य गोमासमेव च । श्वगोमायुकपीना च तप्तकृच्छ्र विधीयते ॥
" उपोष्य वा द्वादशाह कूष्माण्डैर्जुहुयाद् घृतमिति " ॥ अत्राद्यमकामत । कामतोऽपर ।
वृद्धयमः " शुष्कमासाशने विप्रो व्रत चान्द्रायण चरेदिति " । षट्त्रिंशन्मते " अजाविमहिषमृगाणाममासभक्षणे वेशनखरपिराशने मतिपूर्व त्रिरात्रमज्ञानादुपवास " इति । १५
कचिन्मासभक्षणमनुजानाति याज्ञवल्क्यः ( आ १७९ )
" प्राणात्यये तथा श्राद्धे प्रोक्षित द्विजकाम्यया।देवान्पितॄन्समभ्यर्च्य खादन्मास न दोषभागिति"॥
यत्तु मनुः ( ५।५६ )
" न मासभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूताना निवृत्तिस्तु महाफलेति " ॥ २०
तदनुज्ञातपर । न तु निषिद्धपर । निषिद्धाचरणस्य पुण्याजनकत्वादिति शूलपाणिः ।
तन्न । ' सत्यपि पुरुषार्थे नानृत वदेदिति ' निषेधे दार्शपूर्णमासिकेन तेन निषिद्धाचरणस्यैव
क्रत्वुपकारकत्वपुण्यजनकत्वदर्शनात् । तत्वतस्तु नात्र निषिद्धाचरण पुण्यजनक किंतु
प्रजापतिव्रत इव मासनिवृत्तिसंकल्प । यथैकस्या न भुञ्जीतेति निषेधत्वेऽपि व्रतविधिना
भोजनाभावसंकल्प फलाय विधीयते । एतेन " गृहेऽपि निवसन्विप्रो मुनिर्मासविवर्जनादिति " २५
( आ १८१ ) याज्ञवल्कीयमपि व्याख्यात । एतच्च फल सावत्सरिकसंकल्पस्य ।
" वर्षे वर्षेऽश्वमेधेन यो यजेत शत समा । मासानि च न खादेद्यस्तयो पुण्यफल सममिति"॥
मनूक्ते ( ५।५३ ) । योगीश्वर ( आ १८० )
" वसेत्स नरके घोरे दिनानि पशुरोमभि । संमितानि दुराचारो यो हन्त्यविधिना पशून् "॥
हन्तृनाह मनुः ( ५।५१ ) ३०

" अनुमता विशसिता विहता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातका " ॥
अत्र च देवान्पितॄनिति सामान्यतोऽनुज्ञातमप्यजादिमांस विप्रेण न भक्ष्य । तथा च मनुः ( ११।९९ )
" यक्षरक्षःपिशाचाना मद्य मांस सुरासवं । तद्ब्राह्मणेन नात्तव्य देवानामश्नता हविः " ॥
५ यत्तु मेधातिथिः ' निषिद्धमांसपरमेतदि'त्याह । तन्न । विशेषनिषेधवैयर्थ्यापत्ते । न चायं दोषातिशयार्थ । यस्य हि निषेधस्य निषिद्धविषयत्वमेव नियत तत्र निषिद्धविषयत्वाभावगत्या दोषविशेष कल्प्यते । यथा नग्नासु अभ्यगनिषेधे सति पुन पट्टया निषेधो दोषातिशयार्थ । केचित्तु मांसरसलोलुपा अपक्वमांसविषयत्वमस्याहु । उपक्रमे यक्षरक्षःपिशाचानामित्युक्ते । यक्षादीना च कव्यात्वादपक्वमेव मांसमद्य ।
१० तथोपसहारेऽपि "देवानामश्नता हविः"रित्युक्ते (म ११।९९)। देवाना च हविः पक्वमेव विप्रैर्भक्ष्य नापक्वमिति । तत्तुच्छ । न हि यक्षादय पक्व नाश्नति । कव्यात्त्व तु तेषा पक्वालाभेऽपक्वमप्यश्नतीत्यभिप्रायेण । देवाना हविश्चाममपि विहित यथा'ऽग्निहोत्रे तण्डुलैर्जुहोतीति' 'चित्राया न दधिमधुघृत धाना उदक तण्डुलास्तत्ससृष्टप्राजापत्यमिति'। तथा पर्यग्निकृतानारण्यानुत्सृजतीत्यत्र पशुरूपाममांसस्यैव देवतासबध उक्त । तस्मादुपक्रमे मांसमात्रनिन्दार्थ एव । उप-
१५ सहारोऽपि ब्राह्मणस्तुत्यर्थ एव । अत्र विशेष श्रीपितृकृते द्वैतनिर्णये द्रष्टव्य । अथ ब्रह्मचारिणो मधुमांसभक्षणे प्रायश्चित्त देवलः
' मृताव मधुमांस च यदश्नाति व्रती क्वचित् । त्रिरात्रोपोषित सम्यक् रात्रिमेका जले वसेत् ' ॥
इदमज्ञानत सकृद्भक्षणे । ज्ञाने सवर्त्तः
" ब्रह्मचारी तु योऽश्नीयान्मधुमांस कथचन । प्राजापत्य च कृत्वाऽसौ मौञ्जीहोमेन शुध्दति " ॥
२० मौञ्जीहोम पुनरुपयन । वसिष्ठः ( २३।११–१२ ) " ब्रह्मचारी चेन्मधुमांस मश्नीयाच्छिष्टभोजनीय द्वादशरात्र चरित्वा व्रतशेष समापयेत् । सूतकभोजनेषु चैवमिति "। शिष्टभोजनीय शिष्टभोजनयोग्य विहितमित्यर्थ । अभक्ष्यमांसादिभक्षणे प्रातिस्विक तदपि कार्यम् । अपवादमाह देवलः " अकामापन्न वाजसनेयेन दुष्यतीति " । अकामापन्न अकाम भक्षित । तथा ब्रह्मचार्यधिकारे बौधायनः ( २।१।२६-२७ ) " स चेद्व्याधीयीत
२५ काम गुरोरुच्छिष्ट भैषज्यार्थे सर्वं प्राश्नीयाद्येनेच्छेत्तेन चिकित्सेत्स यदाऽगद स्यात्तदादित्यमुपतिष्ठेद्धस शुचिषदिति " । लघुहारीतः
" आमिषस्य तु यो मांसे पक्वमश्नाति सव्रत । कुशमूलविपक्वेन त्र्यह क्षीरेण वर्त्तयेदिति " ॥
अथ शरीरमलभक्षणप्रायश्चित्तं । तत्र मलानाह मनुः ( ५।१३४ )
" वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविट्नखा । श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः " ॥
३० प्रायश्चित्तमाह योगीश्वरः ( प्रा २९९ )

१ घयर-ता । २ घ -श्या ।

" अज्ञानात्तु सुरा पीत्वा रेतोविण्मूत्रमेव च । पुन संस्कारमर्हंति त्रयो वर्णा द्विजातय " ॥
पुन सस्कार पुनरुपनयनम्। इद च प्रातिस्विकै शारीरमलभक्षण प्रायश्चित्तै समुच्चीयत
इति शूलपाणिः । व्रतत्रमेव प्रायश्चित्तमित्यन्ये । अज्ञानत सकृद्भक्षणे तु संवर्तः
" विण्मूत्रभक्षणे विप्र प्राजापत्य समाचरेत् " । ज्ञानत सकृद्भक्षणे अंगिराः
' प्राजापत्य चरेद्वैश्योऽतिकृच्छ्र क्षत्रियश्चरेत् । कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रो विण्मूत्रभक्षण "॥ ५
इति । यत्तु वसिष्ठः (२०।१९–२०) " मत्या मद्यपाने सुरायाश्चाज्ञाने कृच्छ्रातिकृच्छ्रौ
घृतप्राशन पुन सस्कारो मूत्रशकृच्छुक्राभ्यवहारेषु चैवमिति " तदपि विप्रस्य ज्ञानत
सकृद्भक्षणे । अस्मिन्नेव विषये गौतमः ( २३।२–३ ) " अमत्या मद्यपाने पयोघृत
मुदकं वायु प्रतित्र्यह तप्तानि स तप्तकृच्छ्र । तत सस्कारो मूत्रपुरीषरेतसा प्राशने चैवमिति "।
यत्तु बृहस्पतिः " रेतोमूत्रपुरीषाणा शुद्धयै चान्द्रायण चरेदिति " तज्ज्ञानतिपूर्वाभ्यासविषय। १०
केशादिभक्षणे षट्त्रिंशन्मते " केशनखरुधिरप्राशने मतिपूर्वं त्रिरात्रमज्ञानादुपवास " ।
यत्तु स्मृत्यंतरं
" केशकीटनख प्राश्य मत्स्यकटकमेव च । हेमतप्त घृत पीत्वा तत्क्षणादेव शुध्यति " ॥
तन्मुखमात्रप्रवेशविषय । प्रचेताः
" अन्ने भोजनकाले तु मक्षिकाकेशदूषिते । अनतर स्पृशेदापस्तच्चान्न भस्मना स्पृशेत् " ॥ १५
अथ क्रियादुष्टभक्षणे । तत्रोच्छिष्टभक्षणे मनुः ( ११।१५९ )
" बिडालकाकाखूच्छिष्ट जग्ध्वा श्वनकुलस्य च । केशकीटावपन्न च पिबेद्ब्राह्मी सुवर्चला " ॥
पान त्वेकस्मिन्नेव दिने । एतच्चाकामत सकृद्भक्षणे । कामतस्तु विष्णुः
" पक्षिजग्धापदजग्धस्य रसस्यान्नस्य भूयस । सस्काररहितस्यापि भोजने कृच्छ्रपादक " ॥
अकामतोऽभ्यासे शातातपः " श्वकाकवलीढशूद्रोच्छेषेण भोजने त्वतिकृच्छ्र इति " । २०
कामतोऽभ्यासे यावक व्रत प्रकृत्य शखः
" शुनामुच्छिष्टक भुक्त्वा मासमेक व्रती भवेत् । काकोच्छिष्ट गवाघ्रात भुक्त्वा पक्ष व्रती भवेत् " ॥
वृद्धविष्णुः " ब्राह्मण शूद्रोच्छिष्टाशने सप्तरात्र पचगव्य पिबेत् । वैश्योच्छिष्टाशने पचरात्र
राजन्योच्छिष्टाशने त्रिरात्र ब्राह्मणोच्छिष्टाशने त्वेकाहमिति "। " अकामतो विप्रस्य विप्राद्युच्छिष्ट-
भोजने त्रिरात्रोपोषितो ब्राह्मी सुवर्चला पिबेत् । शूद्रोच्छिष्टभोजने षड्रात्रमभोजनमिति " । २५
अकामतोऽभ्यासे तु यमः
" भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुद्धयति । भुजा सह भुक्त्वाऽन्न तप्तकृच्छ्रेण शुध्यति ॥
" वैश्येन सह भुक्त्वाऽन्नमतिकृच्छ्रेण शुद्धयति। शूद्रेण सह भुक्त्वाऽन्न चान्द्रायणमथाचरेदिति "॥
इद कामाभ्यासाविषयमिति विज्ञानेश्वरः । कामतोऽभ्यासे त्वेतदेव द्विगुण कल्प्यम् ।
विज्ञानेश्वरमते त्वकामतोऽभ्यासेऽर्द्धं कल्प्य । अत्योच्छिष्टभोजने तु आपस्तंबः ३०

" अत्याना भुक्तशेषं तु भक्षयित्वा द्विजातयः । चान्द्रं कृच्छ्रं तदर्द्धं च ब्रह्मक्षत्रविशां विधिरिति "॥ चान्द्रं चान्द्रायणं । अंगिराः

" चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे । चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ॥

" षड्रात्रं त्रिरात्रं च वर्णयोरनुपूर्वशः " इति । " द्विजः शुद्धयेत्पराकेण शूद्रः कृच्छ्रेण

५ शुध्यतीति " उत्तरार्द्धं पपाठ शूलपाणिः । सान्तपनं महत् । इदमज्ञानतः सकृद्भक्षणे । ज्ञानतस्तु द्विगुण्यं । पीतोच्छिष्टपाने वृद्धशातातपः

" पीतोच्छिष्टं तु पानीयं पीत्वा तु ब्राह्मणः क्वचित् । त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनरिति"। इदं चाकामतोऽभ्यासे । कामतश्च सकृत्पाने । कामतोऽभ्यासे तु वृद्धशातातपः

" पीतशेषं तु यत्किंचिद्भोजने मुनिभिः स्मृतं । अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् " ॥

१० स्त्रीणामुच्छिष्टभोजने त्वापस्तंबः " शूद्रोच्छिष्टभोजनसप्तरात्रमभोजनं स्त्रीणां चेति " । इदं च कामतः सकृद्भक्षणे च । अकामतः षड्रात्रं । एतत्सहचारिशूद्रोच्छिष्टभोजने दर्शनादिति केचित् । परेऽर्द्धमेवाहुः । सहभोजने तु वृद्धव्यासः

> " माता वा भगिनी वाऽपि भार्या वाऽन्याश्च योषितः ।
> न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेदिति " ।

१५ यत्त्वंगिराः

" ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन । तत्र दोषं न मन्यन्ते सर्वे एव मनीषिणः " इति । तदापद्विषयं विवाहविषयं वा । उच्छिष्टापवादमाहापस्तंबः " पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यं " । आपदि शूद्रगृहभोजने तु पराशरः ( ११।१९ )

" आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि । मनस्तापेन शुद्धयेत्तु द्रुपदानां शतं जपेत् "॥

२० दीपोच्छिष्टभक्षणे षट्त्रिंशन्मते

" दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत् । अभ्यंगाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुध्यति"॥ तैलग्रहणाद्घृते न दोषः । अथ श्राद्धभोजने शंखः

" चान्द्रायणं नवश्राद्धे पराको मासिके मतः । पक्षत्रये अतिकृच्छ्रं स्यात्षण्मासे कृच्छ्रमेव च ॥

"आब्दिके पादकृच्छ्रं स्यादेकाहः पुनराब्दिके । अत ऊर्ध्वं न दोषः स्याच्छंखस्य वचनं यथेति"॥

२५ मासिके आद्ये द्वितीयादिषु तु प्रायश्चित्ततारतम्यं कल्प्यं । षण्मासिरशब्देन ऊन षाण्मासिकमपि गृह्यते । एवमाब्दिकपदेन ऊनाब्दिकमपि दोषः पूर्ववदिति शेषः । तृतीयाब्दिके ऽपि । "त्रिरात्रं वाऽन्यमासेषु प्रत्यब्दं चैतदह स्मृतमिति" षट्त्रिंशन्मते प्रायश्चित्तोक्ते ।

यत्तु भरद्वाजः

" भुक्त्वा चेत्पार्वणश्राद्धे प्राणायामान्षडाचरेत् । उपवासस्त्रिमासादि वत्सरात् प्रकीर्तितं ॥

३० " प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने । असरूपे स्मृतं नक्तं मतमारणके तथा ॥

---

१ ई–भुक्ति झ–भुंक्त ।

" द्विगुणं क्षत्रियस्यैतत्त्रिगुणं वैश्यभोजने । साक्षाच्चतुर्गुणं ह्येतत्स्मृतं शूद्रस्य भोजने " ॥ इति ।
तत्र त्रिमासाद्येत्यापद्विषयं । यत्तु हारीतः
" चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके । एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते " ॥ इति ।
तच्छंखवाक्यसमानविषयम् । मिश्रकं सवत्सरान्तर्गतमित्यपरार्के । एकादशाहिकमित्यन्ये ।
' चान्द्रायणं नवश्राद्धे ' इत्येतदाद्यनवश्राद्धविषयं । ' प्राजापत्यं तु मिश्रके ' इत्याद्यमासिक- ५
विषयम् । द्वितीयनवश्राद्धादिषु षट्त्रिंशन्मतोक्तं
" प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके । त्रैपक्षिके तदर्द्धं स्याद्द्वौ पादौ मासिके तथा ॥
" पादोनं कृच्छ्रमुद्दिष्टं षण्मासे च तथाब्दिके । त्रिरात्रं चान्यमासेषु प्रत्यब्दं तदहः स्मृतमिति " ॥
क्षत्रियादिश्राद्धभोजने तु तत्रैव
" चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः । त्रैपक्षिके सांतपनं कृच्छ्रं मासद्वये स्मृतम् ॥ १०
" क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतं । वैश्यस्यार्द्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिणः ॥
" शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयं । सार्द्धचान्द्रायणं मासि त्रिपक्षे त्वैदवं स्मृतं ॥
" मासद्वये पराकः स्यादूर्ध्वं सांतपनं स्मृतमिति " ॥ यत्तु हारीतः
" एकादशाहे तु त्र्यहं भुक्त्वा संचयने तथा । उपोष्य विधिवद्भुक्त्वा कूष्माण्डैर्जुहुयाद् घृतं " ॥
यदपि विष्णुः १५
" प्राजापत्यं नवश्राद्धे पादोनं त्वाद्यमासिके । त्रैपक्षिके तदर्द्धं तु पंचगव्यं द्विमासिके " ॥ इति ।
तदुभयमापद्विषयम् । भारद्वाजः
" अपाङ्क्तेयान्यदुद्दिश्य श्राद्धमेकादशेऽहनि । ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुश्चान्द्रायणं चरेत् ॥
" आमश्राद्धे तथा भुक्त्वा तप्तकृच्छ्रेण शुद्ध्यति । संकल्पिते तथा भुक्त्वा त्रिरात्रं क्षपणं भवेदिति " ॥
आमश्राद्ध इति नवश्राद्धविषयं । यत्तु तत्रैव विष्णुः " आमश्राद्धासने त्रिरात्रमिति " २०
तदापद्विषयं । यत्तु शंखः " आमश्राद्धासने विद्वान्मासमेकं व्रतं चरेदिति " तदभ्यासविषयं ।
संकल्पित इति षाण्मासिकादिविषयं । मनुः ( ११।१५७ )
" मासिकान्नं तु योऽश्नीयादसमावर्तको द्विजः । स त्रीण्यहान्युपवसेदेकाहमुदके वसेदिति " ॥
यत्तु संवर्त्तः
" मृतकान्नं नवश्राद्धं मासिकान्नं तथैव च । ब्रह्मचारी तु योऽश्नीयान्मधुमासं कथंचन ॥ २५
" प्राजापत्यं तु कृत्वाऽसौ मौञ्जीहोमेन शुद्ध्यतीति " । तद्बुद्धिपूर्वविषयं ।
अनुक्तप्रायश्चित्ते तु सर्वत्र उशनाः
" दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः । ततः संध्यामुपासीत शुद्ध्येच्चेत्तु तदनंतरमिति " ॥
आमश्राद्धे तु सर्वत्रार्द्धं । तथा च षट्त्रिंशन्मते " आमश्राद्धे भवेदर्द्धं प्राजापत्यादि
सर्वदेति " ॥ ३०

अथ **संस्कारान्नभोजने** प्रायश्चित्तविवेकेऽङ्गिराः

" जन्मप्रभृतिसंस्कारे बालस्यान्नस्य भोजने । असपिंडैर्न भोक्तव्यं स्मशानांते विशेषतः " ॥

**व्यासः**

" निवृत्ते व्रतहोमे तु प्राङ्नामकरणात्तथा । चरेत्सांतपनं भुक्त्वा जातकर्मणि चैव हि ॥

५ " अतोऽन्येषु तु भुक्त्वाऽन्नं संस्कारे तु द्विजोत्तमः । नियोगादुपवासेन शुद्धयते निंद्यभोजने"॥

**धौम्यः**

"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे द्विजश्चांद्रायणं चरेत् " ॥

**आपस्तंबः**

" यानकाले नवश्राद्धं संग्रहे चैव भोजनम् । स्त्रीणां प्रथमगर्भे च द्विजश्चांद्रायणं चरेदिति"॥

१० स्त्रीणां संग्रहो विवाहः । अथ **हस्तदत्तादिभक्षणे** प्रायश्चित्तमाह **यमः**

" माक्षिकं फाणितं शाकं गोरसं लवणं घृतं । हस्तदत्तानि भुक्त्वा तु भोक्ता सांतपनं चरेत्"॥

एतत्कामतः सांतपनं दिनत्रयसाध्यं । अकामतस्त्वाह **पराशरः**

" माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् । हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनमिति " ॥

फाणितं इक्षुरसविकारविशेषः । पर्यायदत्तान्नभोजने **वृद्धयाज्ञवल्क्यः**

१५ " ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् । द्वयमेतदभोज्यं स्याद्भुक्त्वा तूपवसेदहरिति"॥

**शूद्रहस्तभोजनादौ तु क्रतुः**

" शूद्रहस्तेन यो भुंक्ते पानीयं वाऽपि पिबेत्क्वचित् । अहोरात्रोषितो भूत्वा पंचगव्येन शुद्धयति"॥

**एवं याज्ञवल्क्योक्तेषु** ( आ. १६८ )

" गोघ्रातं शकुनोच्छिष्टं पैदा स्पृष्टं च कामत " इत्यादिष्वपि कल्प्यं प्रायश्चित्तं । **मनुः**

२० " घृतहीनं तु यो भुंक्ते नरस्त्वाहुतिपंचकं । पश्चाद् घृतेन यो भुंक्ते भुक्त्वा चान्द्रायणं चरेत्" ॥

वृथापाकान्नभक्षणे तु **शातातपः**

" यत्र नाश्नंति देवाश्च पितरश्च यथाविधि । वृथापाकः स विज्ञेयस्तस्य नाद्यात्कथंचन ॥

" वृथापाकस्य भुंजानः प्रायश्चित्तं चरेद्द्विजः । प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुध्यति"॥

**लिखितोऽपि**

२५ " यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते । न तद्भोज्यं द्विजातीनां भुक्त्वा तूपवसेदहः" ॥

तथा

" वृथाकृशरसंयावपायसापूपशष्कुलीः । आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं चरेदिति " ॥

अनाहिताग्नेस्तूपवासः । **पराशरः** ( १२।८ )

" एकपंक्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥

३० " मोहाद्भुंजीत यस्तत्र पंक्तावुच्छिष्टभोजन. । प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सांतपनं तथा "॥

१ घव—पादा ।

एतच्च कामत । यत्तु माधवीये स्मृत्यंतरं
" यस्तु भुंक्ते द्विज पंक्त्यामुच्छिष्टाया कदाचन। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यतीति"॥
तत् कामत । निंदितपंक्तिभोजनेऽगिराः
" यस्तु पंक्तिषु भुजीत कुत्सिताना विशेषत । अहोरात्रोषित स्नात पञ्चगव्येन शुद्ध्यति"॥
क्षत्रियादिपंक्तिषु विष्णुः " ब्राह्मण क्षत्रियपंक्त्यामुपविश्यासंस्पृशन् यदा भुंक्ते तदा ५
नक्तमाचरेद्वैश्यपंक्त्यामेकरात्र शूद्रपंक्त्या त्र्यहमाचरेदिति" ॥ इतिक्षत्रियादुच्छिष्टाशनप्रायश्चित्त॥
अथाभोज्यान्नाः । व्यासः
" गृध्रो द्वादश जन्मानि दश जन्मानि शूकर । श्वा चैव सप्तजन्मानीत्येव मनुरुवाच ह ॥
" शूद्रान्नेनोदरस्थेन य कश्चिन्म्रियते द्विज । भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले" ॥
आपस्तंबः १०
" आहिताग्निस्तु यो विप्र शूद्रान्नेन प्रवर्त्तते। पञ्च तस्य विनश्यति आत्मा ब्रह्म त्रयोऽग्नय"॥
किंचिदपवदति हारीतः
" कदुपक्व स्नेहपक्व पायस दधिसक्तव । एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्" ॥
कदुर्भ्राष्ट्र । "क्लीबेऽबरीष भ्राष्ट्रोना कदुर्ना स्वेदनी स्त्रियामिति" कोशात्।
याज्ञवल्क्यः ( आ १६६ ) १५
" शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिण । भोज्यान्ना नापितश्चैव यश्चात्मान निवेदयेत्" ॥
एतेषा चान्न संप्रोक्ष्य ग्राह्य । " संप्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतमिति" विष्णु-
पुराणात् । आपस्तंबः
" आममन्न मधु घृत धाना क्षीर तथैव च । गुडमासरसा ग्राह्या निवृत्तेनापि शूद्रत" ॥
सुमंतुः २०
" गोरसश्चैव सक्तु च तैल पिण्याकमेव च । अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतं" ॥
पराशरः ( ११।१४ )
" घृत तैल तथा क्षीर गुड तैलेन पाचित । गत्वा नदीतटे विप्रो भुंजीयाच्छूद्रभोजित ॥
" आरनाल तथा क्षीर कांजिक दधिसक्तव । स्नेहपक्व तथा चान्न शूद्रस्यापि न दुष्यति" ॥
लिखितः २५
" भुक्त्वा वार्द्धुषिकस्यान्नमव्रतस्यासुतस्य च । शूद्रस्य च तथा भुक्त्वा त्रिरात्र स्यादभोजन"॥
इदमकामत । कामतस्तु शूद्रादीनुक्त्वा सुमंतुः
" भुंजानोऽन्यतमस्यान्नममत्या क्षपण त्र्यह । मत्या भुक्त्वा चरेत्कृच्छ्र रेतोविण्मूत्रमेव चेति"॥
आवृत्तावधिक कल्प्य । याज्ञवल्क्यः

" यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्" ॥
अथ रजकाद्यन्ने आपस्तंबः
" रजकव्याधशैलूषवेणुचर्मोपजीविनां । यो भुङ्क्ते ब्राह्मणश्चान्नं शुद्धिश्चान्द्रायणेन तु " ॥
एतत्कामतः । अकामतोऽर्द्धं । यत्तु रजकादीनभिधायाह यमः
५ "भुक्त्वा चैषां स्त्रियो गत्वा पीत्वा च प्रतिगृह्य च । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयमिति" ॥
एतदभ्यासे । यत्तु संवर्त्तः
" अन्त्यजान्नं यदा भुङ्क्ते शूद्रो मोहात्कथंचन । एकरात्रोषितो भूत्वा दानं दत्त्वा विशुध्यति " ॥
तदापदि । अथ कापालिकान्ने । आपस्तंबः
" कपालिकान्नभोक्तृणां तन्नारीगामिनां तथा । ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयं " ॥
१० कृच्छ्राब्दमभ्यासविषयम् । अथ चाण्डालान्ने
" अन्त्यावसायिनामन्नं नीयाचस्तु कामतः । स तु चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा " ॥
अत्र कामतश्चान्द्रायणमकामतस्तप्तकृच्छ्रं । यत्तु कृच्छ्रपादानुवृत्तौ वसिष्ठः(२०।१७) " एतदेव चण्डालान्नभोजने तत पुनरुपनयन " । तदपि चान्द्रायणसमानविषयं । विष्णुः (५१।५७)
" चण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक इति " । तद्बलाद्भोजितविषयं ।
१५ यत्तु मनुसुमन्तू
"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छतीति " ॥
तत्र ज्ञानतोऽत्यन्ताभ्यासे तु पातित्योक्तेर्द्वादशाब्दं । वामनस्तु चतुर्विंशत्यब्दं । म्लेच्छादि भिर्बलाद्भोजितस्य कारिताशुभकर्मणप्रायश्चित्तमाहापस्तंबः
" बलाद्दासीकृता ये तु म्लेच्छचाण्डालदस्युभिः । अशुभं कारिताः कर्म गवादिप्राणिहिंसनं ॥
२० " उच्छिष्टमार्जनं चैव तथा तस्यैव भोजनं । खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणं ॥
" तत्स्त्रीणां च तथा सङ्गं ताभिश्च सह भोजनं । मासोषिते द्विजातौ तु प्राजापत्यं विशोधनं ॥
" चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथ वा भवेत् । चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ॥
" संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत् । मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुद्ध्यति ॥
" ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः । संवत्सरैस्त्रिभिश्चैव तद्भावं संनिगच्छति" ॥
२५ शूलपाणिस्तु
" संवत्सरैश्चतुर्भिश्च तद्भावं सोऽधिगच्छति । न्हासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मन " ॥
इत्यत्र पपाठ । प्राजापत्यचान्द्रायणादि मास मासमात्रे गवादिहिंसायां तु प्रातिस्विकं तत्तत्प्रायश्चित्तमेवाकामतो विहितं ज्ञेयं । आशौच्यन्ने छागलेयः
" प्राणायामशतं कृत्वा शुद्ध्यते शूद्रसूतके । वैश्ये षड्भिर्भवेच्छुद्धिर्विंशतिर्ब्राह्मणे दश ॥
३० " एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनं " ॥ इदमकामतः । यत्तु मार्कण्डेयः

" भुक्त्वा तु ब्राह्मणाशौचे चरेत्सातपन द्विज. " । यत्तु शंखः " ब्राह्मणस्य तथा भुक्त्वा शौचे मास व्रती भवेदिति " । तदभ्यासविषय । अत्र सर्वत्र सूतकग्रहण मृतस्याप्युपलक्षण । अंगिराः

" सूतके तु यदा विप्रो ब्रह्मचारी विशेषत । पिबेत्पानीयमज्ञानात्समश्नीयात्स्पृशेयदि ॥
" पानीयपाने कुर्वीत पचगव्यस्य भक्षण । त्रिरात्र भोजने प्रोक्त स्पृष्ट्वा स्नान विधीयते " ॥ ५

ब्राह्मे

" योगो मघात्रयोदश्या॰ कुजरच्छायसज्ञक । मघेन्मघाया मस्येदो हस्तश्चैव करे स्थित ॥
" सूतके मृतके वाऽथ ग्रस्तयो शशिसूर्ययो । छायाया कुजरस्याथ भुक्त्वा तु नरक व्रजेत् ॥
" भुक्त्वा प्रमादाद्विप्रस्तु सकृच्चान्द्रायण चरेत् " ॥ एतच्च प्रायश्चित्त यज्जातीयस्याशौचिनोऽन्नं भुक्त तज्जात्युचितमाशौच कृत्वा तदन्ते कार्यं । तथा च विष्णुः ( २२।७-८ ) १०

" ब्राह्मणादीनामाशौचे य सकृदन्नमश्नाति तस्य तावदाशौच यावत्तेषा आशौचापगमे प्रायश्चित्त कुर्यादिति " । ब्राह्मे " मत्तोन्मत्तातुराणा च मुमूर्षोर्वा कदाचन " । तथा

" तद्गृहे नान्नमश्नीयात्प्रवसत्यग्निहोत्रिणि । एतेषा तु गृहे भुक्त्वा द्विजश्चान्द्रायण चरेदिति " ॥

आपस्तंबौ

" म्लेछादीना पय पीत्वा पुष्करिण्या हृदेऽपि वा । जानुदघ्न शुचि ज्ञेयमधस्तादशुचि स्मृत ॥ १५
" तत्तोय य पिबेद्विप्र कामतोऽकामतोऽपि वा । अकामान्नक्तभोजी स्यादहोरात्र तु कामत " ॥

इति । तत् जानुदघ्नेन । अत एव शातातपः

"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिकेऽपि वा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्त न विद्यते" ॥

अथात्यजभांडजले । पराशरः ( ६।२८ )

" भाडस्थमन्त्यजाना तु जल दधि पय पिबेत् । ब्राह्मण क्षत्रियो वैश्य शूद्रश्चैव प्रमादत ॥ २०
"ब्रह्मकूर्चोपवासेन द्विजातीना तु निष्कृति । शूद्रस्य चोपवासेन तथा दानेन शक्तित" ॥ इति ।

इदमकामत । कामतस्त्वापस्तंबः

" मद्यधम्लेछभाडेभ्यो यस्त्वाप पिबते द्विज । कृच्छ्रपादेन शुध्येत पुन सस्कारमर्हति " ॥

शूद्रोदकपाने शातातपः " यदि विप्र प्रमादेन शूद्रतोय पिबेत्स्वयमि"त्युपक्रम्य

" उपोष्य बिल्वपत्राना पलाशस्य कुशस्य च । एतेषामुदक पीत्वा तेन शुद्धिमवाप्नुयात् " ॥ २५

अपवादमाह जाबालः

" नवभाडे तु पानीय शूद्रविट्क्षेत्रजन्मना । पेय तदपि विप्राणा पयो दधि तथैव च " ॥

शंखः " घृतदधिपयस्तक्राणामाकरभाडास्थितानामदोष " इति । शातातपः

" घृत तैल दधि क्षीर तथैवेक्षुरसो गुड । शूद्रभाडस्थित तक्र तथा मधु न दुष्यति " ॥ ३०

प्रपादिजलपाने लघुहारीतः

" प्रपाजलं सीरघटस्य चैव द्रोणीजलं कोशविनिर्गतं च ।
" पीत्वाऽग्राहेत जलं सवासो उपोषितः शुद्धिमवाप्नुते च " । सीरघटः सीरवृक्षनिर्यासाधारभूतं पात्रं । द्रोणी नौकाजलनिःसारणपात्रं । कोशविनिर्गतं कूपादेर्धर्मपुटकनिःसारितं । एतत्कामतः । सकृत् आपदि तु न दोष इत्याह स एव

९ " द्रोण्यामायसयुक्तायां छत्रे प्रावर्त्तके तथा । ग्रामप्रपाजलं चैव पीत्वाऽऽपत्सु न दुष्यति "॥ छत्रे प्रावर्त्तके सेवके ज्ञात इति शूलपाणिः । यमः
" प्रपामरण्ये घटके च कूपे द्रोणीजलं कोशगतास्तथापः ।
" ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेच " । आपदि तदेव जलं भूमिष्ठं कृत्वा पात्रांतरेणोद्धृतं पेयमित्यर्थः । अथ संसर्गदुष्टे विष्णुः

१० " मद्यादिकुसुमादींश्च फलकंदेक्षुमूलकान् । विण्मूत्रदूषितान्प्राश्य चरेत्कृच्छ्रं च पादतः ॥
" सन्निकृष्टेऽर्द्धमेव स्यात्कृच्छ्रेऽप्यशुचिभोजने " । सन्निकृष्टत्वं महान्संसर्गः । इदं चाज्ञानतः सकृद्भक्षणे रसानुपलब्धौ च । ज्ञानतस्तु द्विगुणं । अभ्यासे त्वावृत्तिः । रसोपलब्धौ तु कामतो व्यासः
" संसर्गदुष्टं यच्चान्यत्क्रियादुष्टं च कामतः । भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत्"॥

११ अज्ञानतो रसोपलंभे त्वर्द्धं । संवर्त्तः
" केशकीटावपन्नं च नीलीलाक्षोपघातितं । स्नाय्वस्थिचर्मसंसृष्टं भुक्त्वा तूपवसेदहरिति " ॥ शातातपोऽपि " केशकीटावपन्नरुधिरमांसाः स्पृश्यस्पृष्टभ्रूणघ्न्यवेक्षितपतत्र्यवलीढश्वशूकरगवाघ्रातशुक्तपर्युषितवृथापाकदेवान्नहविषां भोजने उपवासः पंचगव्याशनं चेति " । एतदुभयमापद्यकामतः । यत्तु शंखः

२० " दूषितं केशकीटैश्च मार्जारैर्मूषकैस्तथा । मक्षिकामशकैश्चैव त्रिरात्रं तु व्रतं चरेदिति " ॥ तदनापदि कामतः । रजस्वलादिसंस्पर्शे तु शंखः । " अमेध्यपतितचांडालपुल्कसरजस्वलावधूतकुणिकुनखिसंस्पृष्टानि भुक्त्वाऽतिकृच्छ्रं चरेदिति " । कुणिर्हस्तविकलः । एतत्कामतः । अकामतोऽर्द्धं । श्वादिस्पृष्टभोजने तु लघुविष्णुः
" शूद्रदृष्टं शुना वाऽपि संस्पृष्टं प्राश्य भोजनं । तप्तकृच्छ्रेण शुध्येत प्राजापत्येन वा पुनः॥

२९ " शक्त्या पराको दातव्य इति धर्मस्य निश्चयः ॥
" क्षत्रवेदयादिकैर्दुष्टं गर्दभैः शूकरैस्तथा । पादहीनं चरेत्कृच्छ्रं शक्त्या सर्वं चरेद्द्विजः " । पाकोत्तरं केशकीटादिपाते तु प्रचेताः
" अन्नं भोजनकाले तु मक्षिकाकेशदूषितम् । अनंतरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेत् "॥ तेन सह पक्वं तु त्याज्यं ।

३० " विशुद्धमपि चाहारं मक्षिकाकृमिजंतुभिः । केशरोमनखैर्वाऽपि दूषितं परिवर्जयेत् " ॥

१ वइल-दत्वा । २ झ-ध्या । ३ घ-तत । ४ घई-नि ।

इति **हारीतोक्तेः**। चडालादिदृष्टे तु **ब्रह्मपुराणे**
" चडालपतितामेध्यै शुनखे कुष्ठिना तथा। नग्नप्रसूतिकोदक्याकौलेयककुटुबिभि ॥
" दुष्ट वा केशकीटाक्त मृद्भस्मकनकाम्बुभि। शुद्धमन्नात्सहृल्लेख प्रदुष्ट व्युष्टमेव चेति "॥
कौलेयक श्वा। कुटुबी प्राणिविशेष। सहृल्लेख विष्ठादिस्मारक। व्युष्ट पर्युषित।
एतत्स्पृष्टभक्षणे तु **ब्रह्मपुराणे** ५
"चडालपतितामेध्यै शुनखे कुष्ठिना तथा। उदक्यासूतिकास्पृष्ट भुक्त्वा मास वने वसेदिति"॥
क्लीबादिदुष्टे तु **शातातपः**
" क्लीबाभिशस्तपतितै सूतिकोदक्यनास्तिकै। दृष्ट नाद्यात्तदन्न तु तस्य निष्कृतिरुच्यते ॥
" तद्भुक्त्वोपवसेद्रात्रिं तत्स्पृष्टे तु चतुर्गुण। उच्छिष्टे षड्गुण प्रोक्तमभ्यासेऽष्टगुण भवेदिति"॥
काकादिस्पृष्टमपवदति प्रायश्चित्तविवेके **यमः** १०
" देवद्रोण्या विवाहेषु यज्ञेषु प्राकृतेषु च। काकै श्वभिश्च सस्पृष्टमन्न तन्न विवर्जयेत् ॥
" अन्न तन्मात्रमुद्धृत्य शेष सस्कारमर्हति। घृताना प्रोक्षणाच्छुद्धिर्द्रवाणामभिपातनात् ॥
" सस्पर्शाच्च भवेच्छुद्धिरणामग्नेर्घृतस्य च। छागेन मुखसस्पृष्ट शुचि चैव हि तद्भवेत् "॥
**यमः** " गुडादिद्रव्यसयुक्त वर्ज्य पर्युषित दधि। तथैव यावकादीनि भक्ष्यादिरचितान्यपि "॥
अत्र प्रायश्चित्त **ब्रह्मपुराणे** १५
" सगुड न विशुद्ध च तथा पर्युषित दधि। दीर्णतक्रमपेय च नष्टस्वाद च फेणवत् ॥
" प्रमादाद्भक्षितैरेभिर्वने पक्षव्रत चरेत्। भुक्त्वा तु क्षारलवण त्रिरात्र तु वने वसेत् "॥
" सगुड मरिचाक्त च वर्ज्य पर्युषित दधीति " **मदनः** पपाठ।
अस्थ्यादिदूषितान्नाशने **ब्रह्मपुराणे**
"अस्थ्या तु दूषित चान्न भुञ्जानस्तु यदा भवेत्। स्नात्वाऽर्कमर्चयित्वा तु घृत प्राश्य विशुद्ध्यतीति"॥ २०
शवदूषितजलपाने **पराशरः** ( ११।३८ )
" कूपे च पतित दृष्ट्वा श्वसृगालौ च मर्कट। अस्थिचर्मादिपतित पीत्वाऽमेध्या अपो द्विज ॥
" नार तु कुणप काक विड्वराह खरोष्ट्रक। गावय सौप्रतीक च मायूर खाड्गक तथा ॥
" वैयाघ्रमार्क्षसैह वा कूपे यदि निमज्जति। तडागस्याथ दुष्टस्य पीत स्यादुदक यदि ॥
" प्रायश्चित्त भवेत्पुसा क्रमेणैतेन सर्वश ॥ २५
" विप्र शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात्। एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यति"॥
सुप्रतीको गज। खाड्गो मृगविशेष। **हारीतः**
" क्लिन्ने भिन्ने शवे चैव तत्रस्थ यदि तत्पिबेत्। शुद्धयै चान्द्रायण कुर्यात्तप्तकृच्छ्रमथापि वेति "॥
तत्कामतोऽभ्यासे। कामतो मानुषशवोपहतजलपानाभ्यासे चान्द्रायणतप्तकृच्छ्रयो
शक्त्या व्यवस्था। शवदूषिते स्नानमात्रेऽपि **हारीतः** ३०

"यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः। जपं त्रिषवणस्नानादहोरात्रेण शुद्ध्यति" ॥
कामतो द्वैगुण्यादि कल्प्यं। वृद्धविष्णुः

" जलाशयेष्वथाल्पेषु स्थावरेषु महीतले। कूपवत्कथिता शुद्धिर्महत्सु न तु दूषणं ॥
" वापीकूपतडागेषु दूषितेषु विशोधनं। घटानां शतमुद्धृत्य पंचगव्यं ततः क्षिपेदिति" ॥

५ अंगिराः

" कूपे विण्मूत्रसंसृष्टे पीत्वा तोयं द्विजोत्तमः। त्रिरात्रेण विशुद्ध्येत्तु कुंभे सान्तपनं स्मृतः" ॥
अथ गुणदुष्टाशने। तत्र मनुः ( ११।१९३ )

"शुक्तानि च कषायांश्च पीत्वा मेध्यानपि द्विजः। तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः" ॥
शुक्तः। कालं परिवासमात्रेण द्रव्यांतरसंसर्गकालपरिवासाभ्यां वा अम्लीभवति। अत्राकामतः

१० " शेषेषूपवसेदहरिति " ( ५।२० ) मनूक्त उपवासः। विष्णुरपि ( ५१।३९ ) " यव-
गोधूमजं पयोविकारं स्नेहाक्तं चुक्रुपानवं वर्जयित्वा पर्युषितं प्राश्योपवसेत्"। चुक्रुपानवं।
सूपशास्त्रोक्तो व्यंजनविशेषः। कामतस्तु संवर्तः " लोहितान्वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।
"केवलानि च शुक्तानि तथा पर्युषितं तु यत्। कर्णीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेदिति" ॥
एतच्चामलकादिफलयुक्तकांजिकादि व्यतिरेकेण।

१५ " कुंडिका सफला येषु गृहेषु स्थापिता भवेत्। तस्यास्तु कंजिका ग्राह्या नेतरस्याः कदाचनेति" ॥
मिताक्षराया स्मरणात्। मनुः ( ५।१० )

" दधि भक्ष्यं तु शुक्ते तु सर्वं च दधिसंभवं। यानि चैवाभिषूयते पुष्पमूलफलैः शुभैरिति" ॥

उद्धृतस्नेहादिषु तु गौतमः ( १७।१८ ) "उद्धृतस्नेहपिण्याकमथितप्रभृतीनि चाऽऽत्तवीर्याणि
नाश्नीयात्" इत्युक्त्वा "प्राक्पंचनखेभ्यश्छर्दनं घृतप्राशनं चेति" ( २३।११ )।

२० पर्युषितापवादमाह याज्ञवल्क्यः ( आ. १६९ )

" अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंभृतं। अस्नेहा अपि गोधूमयवगोरसविक्रिया" ॥
अहुतान्नभोजने तु लिखित आह

" यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते। न तद्भोज्यं द्विजातीनां भुक्त्वा तूपवसेदहः" ॥
संवर्तः

२५ " शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने। अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति" ॥
भिन्नापवादमाह देवलः " ताम्ररजतसुवर्णाश्मकांसशुक्तिस्फटिकानां भिन्नमभिन्नमिति" ॥
भिन्नभाजनं कार्यं।

'भिन्नकांस्ये तु योऽश्नीयात्तपा स्नात्वा जपेद्विज ।गाय यष्टसहस्र तु एकभक्तस्तदा शुचिरिति"॥ बौधायनोक्तेः । एतच्च ज्ञानत । अज्ञानतस्तु **पराशरः**
" भिन्नभांडे तु भुजानो ह्यज्ञानेन द्विजोत्तम । सुवर्णोदकसस्पृष्टघृत प्राश्य विशुद्धयति " ॥
**मिताक्षरायां स्मृत्यंतरे**
" वटार्काश्वत्थपत्रेषु कुभीतिंदुकपत्रयो । कोविदारकदंबेषु भुक्त्वा चाद्रायण चरेत्" ॥ ५
तथा । " पलाशपद्मपत्रेषु गृही भुक्त्वैंदव चरेत् । वानप्रस्थो यतिश्चैव लभते चाद्रक फलं"॥
पलाशो वल्लीपलाश इति स्मृत्यर्थसारे हेमाद्रौ च । अथ **कालदुष्टाशने** । **ब्रह्मपुराणे**
" सूतके मृतके वाऽपि ग्रस्तयोश्चन्द्रसूर्ययो । छायाया कुजरस्याथ भुक्त्वा तु नरक व्रजेत् ॥
"भुक्त्वा प्रमादाद्विप्रस्तु सम्यक् चाद्रायण चरेत्" । षट्त्रिंशन्मते । " चद्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्धयतीति " । तदकामत । **बृहन्नारदीये** १०
" अर्कद्विपर्वरात्रौ च चतुर्दश्यष्टमी दिवा । एकादश्यामहोरात्र भुक्त्वा चाद्रायण चरेत्" ॥
ग्रहणसन्निहितनिषिद्धकाले अज्ञानतो भोजने तु चद्रसूर्यग्रह प्रकृत्य **षट्त्रिंशन्मते** "तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्धयतीति " । **प्रायश्चित्तविवेके संवर्तः**
" अपोशानमकृत्वा तु यो भुक्ते नापदि द्विज । भुजानस्तु यदा ब्रूयाद्गायत्र्यष्टशत जपेत्" ॥
अष्टशतमष्टोत्तरशत । **स एव** १५
" अनाचात विशेषस्तु भक्षयेद्वाऽपि किंचन । गायत्र्यष्टसहस्र तु जप्य कृत्वा विशुद्धयति" ॥
**लघुहारीतः**
" विना यज्ञोपवीतेन भुक्ते च ब्राह्मणो यदि । स्नानं कृत्वा जप चैव उपवासे विशुद्धयति " ॥
**ब्रह्मपुराणे**
" रेतोमूत्रपुरीषाणामुत्सर्गश्चेत्प्रमादत । तदादौ तु प्रकर्त्तव्या तेन शुद्धिर्मृदंबुभि ॥ २०
"पश्चादाचम्य तु जले जप यमघमर्षण " । एतदनगीर्णग्रासेन । सक्क्त्रिगीर्णग्रासे तु **आपस्तंब**
" भुजानस्य तु विप्रस्य कदाचित्स्रवते गुद । उच्छिष्टमशुचित्व च प्रायश्चित्तं कथ भवेत् ॥
" आदौ कृत्वा तु वै शौच तत पश्चादुपस्पृशेत् । अहोरात्रोषितो भूत्वा पचगव्येन शुद्धयति "॥
**यत्तु शातातपः**
"मूत्रोच्चारसमुत्सर्गे मोहात् भुक्तेऽथ वा पिबेत् । त्रिरात्र तत्र कुर्वीत इति शातातपोऽब्रवीदिति"॥ २५
तद्भूयो ग्रासाशने । **आपस्तंबः**
' मूत्रोच्चार सकृत्कृत्वा अकृत्वा शौचमात्मन । मोहाद्भुक्त्वा त्रिरात्र तु यवान्पीत्वा विशुद्धयतीति'॥
मूत्रपद पुरीषादेरुपलक्षण । **शातातपः**
"अन्तर भोजनकाले चेदशुचिर्भवति द्विज । भूमौ निक्षिप्य त ग्रास स्नात्वा विप्रो विशुद्धयति ॥

१ नरवईयर-दुष्टाशन

" भक्षयित्वा तु तं ग्रासमहोरात्रेण शुद्ध्यति। अशित्वा सर्वमन्नं तु त्रिरात्रेण विशुध्यतीति"॥
तैलाभ्यंगादिनास्नाननिमित्ते अकृतस्नानस्य संवर्त्तः

" समुत्पन्ने द्विजः स्नाने भुंजीताथ पिबेत्तथा। गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः"॥
अष्टसहस्रमष्टाधिकसहस्रं। एतच्च सकृदभ्यासे शंखः

५ " नीलं वस्त्रं परीधाय भुक्त्वा स्नानार्हको भवेत्। त्रिरात्रं तु व्रतं कुर्याच्छित्वा गुल्मलतां तथेति"॥
क्रतुः

"आसनारूढपादो वा वस्त्रार्द्धप्रावृतोऽपि वा। मुखेन भमितं भुक्त्वा कृच्छ्रं सांतपनं चरेदिति"॥
एवमेव स्थितप्रन्हगच्छच्छयानैरन्नभोजने एकाहव्यहादीन्यभक्ष्यभक्षणप्रायश्चित्तानि योजनीयानि।
पराशरः ( ११६२ )

१० "भुंजानश्चैव यो विप्रः पादं हस्तेन संस्पृशेत्। स्वमुच्छिष्टमसौ भुंक्ते यो भुंक्ते भुक्तभाजने॥
"पादुकास्थो न भुंजीत पर्यंकस्थः स्थितोऽपि वा।श्वानचंडालदृष्टश्चैव भोजनं परिवर्जयेत्"॥ इति।
इति कर्तृदुष्टाशने प्रायश्चित्तं। अथ वाग्दुष्टभावदुष्टाशने। ब्रह्मपुराणे

"भक्ष्यं त्वभक्ष्यवाक्येन यो वदाद्रोषधर्मतः। गुरोरपि न भोक्तव्यं वाग्दुष्टं तन्महाचक्षदिति"॥
यत्र वर्णाकारादिनाऽभक्ष्यबुद्धिर्विषादिशंका वा जायते तद्भावदुष्टं। तत्राकामतः सकृद्भक्षणे
१५ भावदुष्टादि प्रकृत्य गौतमः ( २३।२६ ) " छर्द्दनं घृतप्राशनं चेति "। कामतस्तु शंखः
" वाग्दुष्टं भावदुष्टं च भाजने भावदूषिते। भुक्त्वाऽन्नं ब्राह्मणः पश्चात्त्रिरात्रं तु व्रती भवेदिति"॥
हारीतः

" शंकितं प्रतिषिद्धान्नं विद्विष्टान्नमथापि वा। यदि भुंजीत विप्रो यः प्रायश्चित्तं कथं भवेत्॥
" एकरात्रोपवासश्च गायत्र्यष्टशतं जपेत्। प्राशयेत्पंचभिर्मंत्रैः पंचगव्यं पृथक्पृथगिति "॥

२० इति सुरापानप्रसक्तानुप्रसक्तप्रायश्चित्तं।

अथ सुवर्णस्तेये। आपस्तंबः " ब्राह्मणसुवर्णापहरणं महापातकमिति "॥
" ते सुवर्णस्तु षोडशेति " याज्ञवल्क्योक्तेः ( आ. ३६३ )। सुवर्णशब्दः षोडशमाषो-
न्मितहेमवचनः। एवं चेतोन्यूनहरणे न महापातकं। प्रायश्चित्तमाह याज्ञवल्क्यः
( प्रा. २९८ ) " अनिविद्य नृपे शुद्धयेत्सुरापव्रतमाचरन्निति "। सुरापव्रतं द्वादशाब्दं।
२५ " सुवर्णस्तेयानुवृत्तौ महाव्रतं वा द्वादशाब्दानि कुर्यादिति " कल्पतरौ विष्णूक्तेः।
" द्वादशाभिर्वर्षैर्महापातकिनः पूयते " इति हारीतोक्तेश्च। युगपदनेकसुवर्णहरणेऽप्येकमेव
प्रायश्चित्तं नावृत्तिः। हरणक्रियाया एकत्वात्। ब्रह्मवधादौ तु हननक्रियाभेदादावृत्तमेव
प्रायश्चित्तं। प्रायश्चित्तांतरे आह स एव " आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत् "।

अत्रात्मसमस्वर्णदानं धनवद्विषयं तत्राशक्तस्तु विप्रतुष्टिकृत्सुवर्णं दद्यात् । यत्तु व्यासः "एतदेव व्रतं स्तेन पादन्यूनं समाचरेदिति" तन्निर्गुणस्वामिकसुवर्णापहारविषयमिति निबंधकृतः । वयं तु पादोनसुवर्णापहारविषयमिति प्रतीमः । यदप्यपरार्के "त्रिः षडब्दं वा चरेत्कृच्छ्रं यजेद्वा क्रतुना द्विजः । तीर्थानि वा भ्रमन् विप्रस्तत स्तेयाद्विमुच्यते"॥ इति तत् क्षुत्क्षामकुटुम्बभरणाय निर्गुणस्वामिकसुवर्णापहारविषयमिति केचित् । युक्तं तु पूर्वरीत्याऽर्द्धसुवर्णापहारविषयत्वं साम्यातिदेशविषयीभूताश्वरत्नाद्यपहारविषयत्वं वा क्रतुरत्र स्वर्जिदादिः । तीर्थभ्रमणं चाशीत्यधिकशतयोजनगमनं द्रष्टव्यं । यत्त्वापस्तंबः "स्तेयं कृत्वा सुरां पीत्वा गुरुतल्पं च गत्वा चतुर्थकालमितभोजना अपोऽभ्युपेयुः सवनानुकल्पं स्थानासनाभ्यां विहरंत एते त्रिभिर्वर्षैः पापं नुदंतीति" । यदप्यंगिराः "महापातकसंयुक्ता वर्षैः शुद्ध्यन्ति ते त्रिभिरिति" तदुभयं यदापहारोत्तरमेवानुतापेन स्वामिने प्रत्यर्पयति तद्विषयमिति प्राञ्चः । अन्ये तु सुवर्णचतुर्थांशापहारविषयत्वमाहुः । वस्तुतः सगुणविप्रस्य निर्गुणविप्रस्वामिकसुवर्णापहारविषयत्वं युक्तं । तथा च भविष्ये "विप्रस्य गुणवान्विप्रो निर्गुणस्यापहृत्य च । चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्व्यपोहतीति" ॥ विषयांतरमप्युक्तं तत्रैव

"यदा च निर्गुणः स्वामी क्षत्रियो वैश्य एव च । हृत्वा च ब्राह्मणो वीर तदापस्तंबभाषितं"॥ तत्रैव "क्षत्रियस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः । चतुर्थकाले भुञ्जानस्त्रिभिर्वर्षैर्व्यपोहतीति"॥ इदं च वाक्यद्वयं न्यूनाधिकपरिमाणविषयत्वादविरुद्धं । यत्तु सुमंतुः "सुवर्णस्तेयी मासं सावित्र्याऽष्टसहस्रमाज्याहुतीर्जुहुयात्प्रत्यहं त्रिरात्रमुपवासस्तप्तकृच्छ्रं च पूतो भवतीति" । यच्चापस्तंबः "स्तेयं कृत्वा सुरां पीत्वा संवत्सरं चरेदिति" तत्सुवर्णद्वादशभागापहारविषयं । यत्तु सुमंतुः "सुवर्णस्तेयी द्वादशरात्रं वायुभक्षः पूतो भवतीति" तन्मानसापहारविषयमिति प्राञ्चः । निष्फलनामिकप्रवृत्तिविषयत्वं तु सम्यक् । मिताक्षरायां इदं मनसि पापं ध्यात्वा प्रणवपूर्वा व्याहृतीर्मनसा जपेत् । व्याहृत्य प्राणायामं त्रिरात्रं चरेत् । प्रवृत्ता कृच्छ्रं द्वादशरात्रं चरेदिति । व्याहृत्याभिलप्य । षट्त्रिंशन्मते

"यवमात्रे सुवर्णस्य प्रायश्चित्तं दिनद्वयं ॥

"सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः । कुर्यात्सांतपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥

"अपहृत्य सुवर्णस्य माषमात्रं द्विजाधमः । गोमूत्रयावकाहारस्त्रिभिर्मासैर्व्यपोहतीति" ॥

"सुवर्णस्यापहरणे वत्सरं यावकी भवेत् । ऊर्ध्वं प्राणांतिकं ज्ञेयमथवा ब्रह्महव्रतं" ॥

वत्सरमिति सुवर्णपरिमाणद्वादशांशमाषाधिकहेमविषयं । प्राणांतिकं तु ज्ञानपूर्वकापहारविषयं । अज्ञानतस्तु द्वादशाब्दं विप्रस्य । यत्तु भवदेवः

---

१ धनवद्वर-शक्त। २ ईहा पः।

"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते" ॥ इति। विष्णूक्तेः "क्षत्रियादेः पादपादहानिरिति" । तदयुक्तं। द्विविधं हि स्तेयं बलावष्टम्भेन क्रियमाणं साहसाख्यमेकमपरं च चौर्यं । तत्राद्ये पादोनादिवाक्येन चतुर्विधसाहसविषयेण 'पर्षद्या ब्राह्मणानामि'त्यङ्गिरोवचसोक्तस्य द्वैगुण्यस्यैव न्याय्यत्वात् द्वितीयेऽपि विप्रस्वामिक-
५ सुवर्णस्य 'देवब्राह्मणराज्ञां तु विज्ञेयं द्रव्यमुत्तममिति ' नारदेनोत्तमद्रव्यतोक्तेस्तत्र च दण्डभूयस्त्वात्तथा " गोषु ब्राह्मणसंस्थासु " इत्यनेन विप्रस्वामिकगोवधे दण्डगौरवात् " विदुषोतिक्रमे दण्डभूयस्त्वमिति " वचनाच्चात्रापि क्षत्रियादीनां प्रायश्चित्ताधिक्यमेवोचितं न तु पादन्यूनमिति । कामतः सुवर्णस्तेये तु याज्ञवल्क्यः ( प्रा २०४ )
"ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत्। स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽथ वा शुचि "॥
१० मुक्तः प्रहृतोऽपि जीवन्नप्रहृत एवेत्यर्थः । 'अघ्नन्नेनस्वी राजेति ' गौतमेनाप्रहारे राज्ञो दोषोक्तेः ( १२।४२ )।
" ततो मुसलमादाय सकृद्धन्यात्तु तं स्वयं । यदि जीवति स स्तेनस्ततः स्तेयाद्विमुच्यते" ॥ इति संवर्ताच्च । एतेन 'स्तेनपोप्याणां महता मृतिसम्भावनायामपहतोऽपि जीवन् शुद्ध ' इति माधवोक्तिरपास्ता । मानाभावाच्च । भविष्ये
१५ " महत्यपहृते पुत्र तथाल्पे च हृते गुह । हृतद्रव्यविशेषाद्वै स्वामिनस्तस्करस्य च ॥
" प्रयोजनविशेषाच्च विशेषाद्देशकालयोः । अनुबन्धविशेषाच्च प्रायश्चित्तं प्रकल्पयेत्" ॥ तत्रैव
" यद्यस्यापहृतं द्रव्यं तत्तस्यैव विनिर्दिशेत्। प्रायश्चित्तं ततः कुर्यादेवं शुद्धिमवाप्नुयात्" ॥ विष्णुः ( ५२।१४ )
२० " तस्यैवापहृतं द्रव्यं धनिकस्याभ्युपायतः । प्रायश्चित्तं ततः कुर्यात्कल्मषस्यापनुत्तये" ॥ अत्र विशेषमाह मनुः ( ११।१६४ ) " चरेत्सांतपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये " इति। तत् द्रव्यं निर्यात्य स्वामिने दत्वा शुद्धये प्रायश्चित्तयोग्यत्वार्थमित्यर्थः । अत एव भविष्ये " तन्निर्यात्येति वाक्यं तु प्रवदंति मनीषिणः । तत्पूर्वं चैव योग्यस्य सूचकं नात्र संशय "॥ तत्पूर्वं प्रातिस्विकप्रायश्चित्तात् पूर्वं योग्यस्येति भावप्रधानो निर्देशः । योग्यत्वस्येत्यर्थः ।
२५ केचित्तु सुवर्णपरिमाणादूनं चोरितं धनं स्वामिने दत्वाऽस्य शुद्धये सांतपनकृच्छ्रं कुर्यादिति मानवीयस्यार्थः । तच्छब्देन सुवर्णमितं पूर्वं ततो न्यूनं योग्यस्य शुद्धेः कारकमिति तु भविष्यस्यार्थ इत्याहुः । सुवर्णस्तेये तु एकादशगुणाधिकं चोरितं धनं स्वामिने देयं । तथा च मिताक्षरायां
" स्तेये ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः । स्वामिनेऽपहृतं देयं हर्त्रा त्वेकादशाधिकं " ॥

१ ह्र—स्ते । २ ह्र—रे ।

लघुविष्णुः
" स्तेये ब्रह्मस्वभूते तु सुवर्णहरणे कृते । पश्चात्तेनैव दातव्यं तस्मै ह्येकादशाधिकं ।
" गुणसंशुद्धिमाधाय ततश्चान्द्रायणत्रयं । संवत्सरेण दातव्यं निपुणं शुद्धिमिच्छता ॥
" अभावे काञ्चनस्य स्याद्व्रतमेतच्चतुर्गुणं । चरेद्यतात्मा निःसंगः पूर्णं वर्षचतुष्टयं ॥
" समाप्ते काञ्चनं गाश्च रजतं चापि शक्तितः । देयमन्नं द्विजाग्र्येभ्यः शुभं पापोपशान्तये"॥इति । ५
गुणसंशुद्धिरात्मशुद्धिः । चान्द्रायणत्रयमिति । यवमध्यादीनि त्रीणि चान्द्रायणवत्सर-मभ्यसेदित्यर्थः । इदं च दोषप्रायश्चित्तादिकं रसवेधाद्यापादितसुवर्णसादृश्ये ताम्रादौ न भवति । सुवर्णत्वजातिसमवायाभावात् ।
अथ सुवर्णस्तेयसमेषु मनुः ( ११।५७ )
"निक्षेपस्यापहरणं नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतं " ॥ स्मृत्यन्तरे १०
" पुरुषाणां कुलीनानां नारीणां च विशेषतः । मुख्यानां चैव रत्नानां हरणे वधमर्हति" ॥
याज्ञवल्क्यः ( प्रा २३० )
" अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा । निक्षेपस्य च सर्वस्य सुवर्णस्तेयसमितम् " ॥
मनुष्यग्रहणेनैव सिद्धे स्त्रीपदं षडब्दयावृत्त्यै । विष्णुः "ब्राह्मणभूहरणं सुवर्णस्तेयसममिति" ॥
अत्र षडब्दमित्युक्तं परिभाषायां । अल्पमूल्यरत्नादौ तु चतुर्विंशतिमते " रत्नानां हरणे १५
विप्रश्चरेच्चान्द्रायणत्रयमिति " । मनुरपि ( ११।१६७ )
" मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च । अयःकांस्योपलानां च द्वादशाहं कणान्नता" ।
स एव ( ११।१६६ )
" मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य च । वापीकूपतडागानां शुद्धिश्चान्द्रायणं स्मृतमिति"॥
मनुष्यो दासः । स्त्री दासी । स्मृत्यन्तरे २०
" रूप्यं हृत्वा द्विजो मोहाच्चरेच्चान्द्रायणव्रतं । गद्याणदशकादूर्ध्वमाशताद्द्विगुणं चरेत् " ॥
"आमहस्राच्च त्रिगुणमूर्ध्वं हेमविधिः स्मृतः" इति । गद्याणो गुर्जरदेशे प्रसिद्धः । रत्नताम्राय-कांस्यमनुष्यापहारेऽपि प्रायश्चित्तेष्वेवमेव मूल्येयत्ता ज्ञेया । मनुः ( ११।१६२ )
"धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः । सजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यतीति "॥
स्मृत्यंतरे " अष्टापद्यं स्तेयकिल्बिषं शूद्रस्य द्विगुणोत्तराणीतरेषामिति " । किल्बिषं २५
दण्डः । स शूद्रस्यापह्रियमाणद्रव्यादष्टगुणः । विट्क्षत्रविप्राणां तु षोडशद्वात्रिंशच्चतुःषष्टिगुण इत्यर्थः । अत एव मनुः ( ८।३३८ )
" अष्टापद्यं हि शूद्रस्य स्तेये भवति किल्बिषं । षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु ॥
" ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् " । शंखः

१ द्वा-कर्तव्यं । २ ख-पादशादि ईश-मायातान् । ३ ख-यशाय यर-यत्नाय ।

" तथा धनस्यापहारे मणीनां रजतस्य च। धान्यापहरणे चैव कुर्यात्संवत्सरं व्रतमिति " ॥

इदं च दशकुम्भधान्ये तन्मूल्ये च धनादावपहृते ज्ञेयं। " धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिके वधः " इति मनूक्तेः ( ८।३२१ )। कुम्भमाह कात्यायनः "दशद्रोणा भवेत्खारी कुम्भोऽपि द्रोणविंशतिरिति "। द्रोणस्तु

५ " पलं च कुडवः प्रस्थ आढको द्रोण एव च। धान्यमानेषु विज्ञेयाः क्रमशोऽमी चतुर्गुणा"॥ इत्येवं प्रमाणं ज्ञेयं। यत्तु जाबालः

" पक्वान्नमौषधं तैलं शय्यासनमुपानहौ। कांस्यायस्ताम्रसीसं वा अर्द्धं कृच्छ्रार्द्धमेव च ॥

" उदके फलमूलेषु पुष्पपर्णसुगन्धिषु। क्षुद्राढमधुमांसेषु सतोष्यं स्वामिने तत ॥

" पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन युज्यत " इति। कृच्छ्रार्द्धं पादमित्यर्थः। तदधिकपरिमाण

१० गुडादिविषयं। जाबालः

"मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च। अयः कांस्योपलानां च द्वादशाहं कणान्नतेति" ॥ द्वादशगुणप्रायश्चित्तदर्शनात्तन्मूल्याद्द्वादशगुणमूल्यमणिमुक्ताद्यपहारे इदं। यत्तु विष्णुः

" रजताश्वगोभूमिकन्यानां सकृद्धरणे चान्द्रायणमिति " तत्किञ्चिदधिकविषयं।

मनुः ( ११।१६८ )

१५ " कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षिगन्धौषधीनां च रज्वाश्चैव त्र्यहं पयः"॥ इति। कीटजाः पट्टादयः। देवद्रव्यापहारे सुमंतुः " देवद्विजद्रव्यहर्त्ताऽप्सु निमग्नोऽघमर्षणमावर्त्तयेदिति"। अत्र संवत्सरप्रमाणात्तत्कालीना वृत्तिर्ज्ञेया।

स्तेयप्रसङ्गाद्वृत्त्युच्छेदे प्रायश्चित्तमाह शङ्खः

" यस्य यस्य तु वर्णस्य वृत्त्युच्छेदं समाचरेत्। तस्य तस्य वधे प्रोक्तं प्रायश्चित्तं समाचरेत् ॥

२० " अप्रदत्त्य तु वर्णानां विप्रो भूमिं प्रमोदत। प्रायश्चित्तं वधे प्रोक्तं ब्राह्मणानुमते चरेदिति"॥ एतच्च वृत्त्यर्हभूम्यपहारे ज्ञेयं। अत्र चापहारशब्दस्य बलात्ज्ञानपूर्वं परस्वादानवाचित्वात्प्रमादत इति शास्त्रार्थपरिज्ञानपरं। अतोभयजवधनिमित्तकप्रायश्चित्तातिदेशात्पादोनं। तच्च कामे कामोक्तस्य अकामे त्वकामस्योक्तेति। स्तेयापवादमाह शङ्खः

" अस्तेयमग्नये काष्ठमस्तेयं च तृणं गवे। कन्याहरणमस्तेयं यो हरत्यनलङ्कृतामिति " ॥

२५ कन्याहरणं राक्षसविवाहपरं। मनुरपि ( ८।३४२ )

" द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति " ॥

तथा

" चणकव्रीहिगोधूमयवानां मुद्गमाषयोः। अनिषिद्धैर्गृहीतव्यो मुष्टिरेकः पथि स्थितैः ॥

१ स्वधरय-प्रसादत।

" तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणः " ॥ इति ( ११।१६ ) । इति भट्टनीलकंठकृते प्रायश्चित्तमयूखे स्तेयप्रायश्चित्तानि[1]।

अथागम्यागमनप्रायश्चित्तानि। तत्र गुरुतल्पे शंखः

" अध शायी जटाधारी पर्णमूलफलाशनः । एककालं समश्नन्वै वर्षे तु द्वादशे गते ॥

" रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः । व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे " इति। ५

गुरुतल्पगो गुरुभार्यागामी । गुरुः पिता । अत एव संवर्त्तः

" पितृदारान्समारुह्य मातृवर्ज्जं नराधमः । भगिनीं च निजां गत्वा निष्कृतिर्न विधीयते " ॥ इति । निष्कृतिर्व्रतरूपः । मरणरूपा त्वस्त्येव

" पितृभार्यां तु विज्ञाय मातृवर्ज्जं नराधमः । जननीं वाऽथ विज्ञाय नामृतः शुद्धिमाप्नुयादिति " ॥ षट्त्रिंशन्मतात् । अत्र जननीगमनं न महापातकं किंत्वतिपातकं । " मातृगमनं दुहितृगमनं १० स्नुषागमनम् " इत्यतिपातकानीति विष्णूक्तेः ( ३४।१ ) । " मातृदुहितृभगिनीस्नुषागमनान्यतिपातकानीति " भवदेवीये वृद्धहारीतोक्तेश्च । एतेन गुरुश्चासावंगनेति कर्मधारयेण " जननीगमनं महापापमिति " भवदेवोक्तिरपास्ता । यत्तु शूलपाणिः

" आचार्यस्तु पिता ज्येष्ठो माता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥ " वर्णश्रेष्ठः पितृव्यश्च पुंस्येते गुरवो मताः " इति देवलोक्तेः । " आचार्यः श्रेष्ठो १५ गुरूणामिति " गौतमोक्तेः ( २।५६ ) । " त्रय पुरुषस्य गुरवो भवन्ति माता पिता आचार्यश्चेति " ( ३१।१–२ ) विष्णूक्तेश्चाचार्यादिपत्नीगमनमपि महापापमित्याह तन्न । " आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः " इत्याचार्यादिपत्नीषु गुरुतल्पातिदेशविरोधात् । न चातिदेशो हीनवर्णपत्नीपरो मानाभावात् । देवलादिवचांसि त्वाचार्यादीनां पूज्यत्वपराणि । यच्च " गुरोश्चालीकनिर्बंधः " ( ११।५५ ) इत्यत्र गुरुपदं केवल- २० पितृपरमत्र त्वाचार्यादिपरमिति विरुद्धं शूलपाणेर्वचः श्रद्धेयं । प्रायश्चित्तांतरमाङ्गिराः " महाव्रतं चरेद्वाऽपि दद्यात्सर्वस्वमेव चेति " । व्यभिचारिताया सवर्णाया मातरि सकृद्गमने तु योगी ( प्रा. २६० ) " चान्द्रायणं वा त्रीन्मासानभ्यस्य वेदसंहितामिति " । गर्भोत्पत्तौ तु एतान्येव प्रायश्चित्तानि द्विगुणानि " गमने यद्व्रतं प्रोक्तं गर्भे तद्द्विगुणं भवेत् " इत्युशनोवाक्यात् । गमनावृत्तावपि प्रायश्चित्तावृत्तिः । कामतो जनन्यतिरिक्तगुरुभार्यागमने २५ तु याज्ञवल्क्यः ( प्रा २५९ ) " तप्तेऽयःशयने सार्द्धमायस्या योषिता स्वपेत् " । तप्ते शरीरदाहक्षमे । मनुरपि ( ११।१०४ )

१ अवकयईरनमध-पाठ ।

" स्वय वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ । नैऋतीं दिशमातिष्ठेदानिपातादजिह्मग " ॥ इति
* आतिष्ठेद्‌ब्रजेत् । निपातो मरण । अयमेव न दड
" आसामन्यतमा गच्छन् गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो दडो विधीयते "॥
इति नारदोक्तेः ( १२।७९ ) । जनन्यामकामतोऽपि गमने एतदेव
५ मरणात प्रायश्चित्तद्वय बोध्यम् । जनन्या कामतस्तु वसिष्ठः ( २०।१४ )
" निष्कालको घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानमवदाहयेदिति " । अभ्यासे गर्भोत्पत्तौ चेदमेवात्यानुक्ते । एतानि च प्रायश्चित्तान्यौरसपुत्रस्यैव । दत्तकादीना न्यून कल्प्यमिति निबंधकृतः । " जनन्या कामत प्रवृत्तस्य रेत सेकादर्वाङ्निवृत्तौ द्वादशाब्द ।
अकामत षडब्द तत्सपत्न्या कामत षडब्द अकामतस्तदर्द्धमि"त्यादि कल्प्य । शूद्रस्य
१० विप्रागमने तु प्रचेताः
" शूद्रस्य ब्राह्मणीं मोहाद्‌गच्छत शुद्धिमिच्छत ।पूर्णमेव व्रत देय माता यस्माद्धि तस्य सेति"॥
गुरूपभुक्तास्वपि साधारणस्त्रीषु गमने गुरुतल्पदोषे नास्तीत्याह व्याघ्रपादः
" जात्युक्त पारदार्य च कन्यादूषणमेव च। साधारणस्त्रीयो नास्ति गुरुतल्पत्वमेव चेति " ॥
साधारणस्त्री वेश्या । अथ भगिन्यादिगमने मनुः ( ११।५८ )
१५ " रेतःसेक कुमारीषु स्वयोनिष्वन्त्यजासु च । सख्यु पुत्रस्य च स्त्रीषु गुरुतल्पसम विदुरिति " ॥
स्वयोनिर्भगिनी । कुमारी उत्तमजातीया कन्या ।
" सकामास्वनुलोमासु न दोषस्त्वन्यथा दम । दूषणे तु करछेद उत्तमाया वधस्तथेति " ॥
तत्रैव दडविशेषोक्ते । याज्ञवल्क्यः ( प्रा २३१ )
" सखिभार्याकुमारीषु स्वयोनिष्वत्यजासु च । सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतमिति"॥
२० अत्यावसायिन आह मध्यमांगिराः
" चडाल श्वपच क्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽत्यावसायिन "॥ इति ।
चडालादीनाह याज्ञवल्क्यः ( आ ९३–९४ )
" ब्राह्मण्या क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा । शूद्राज्जातस्तु चाडाल सर्वधर्मबहिष्कृत ॥
"क्षत्रिया मागध वैश्या शूद्रात्क्षत्तारमेव च। शूद्रादायोगव वैश्या जनयामास वै सुत "॥ इति ।
२५ विष्णुः (३६।४–६) "पितृव्यमातामहमातुलपत्न्यभिगमन गुरुदारगमनसम पितृष्वसृगमन श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमन चेति "। अत्र साम्यातिदेशादर्द्ध प्रायश्चितमित्युक्त परिभाषाया । याज्ञवल्क्यः ( प्रा २३२–२३३ )
" पितु स्वसार मातुश्च मातुलानीं स्नुषामपि । मातु सपत्नीं भगिनीमाचार्यतनया तथा ॥

---

देवलोक्ते' इति ह्या यत्तरपुस्तकेषु पाठ ।

" आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग " इति । मातुः सपत्नी हीनवर्णा । समोत्तमवर्णा गमनस्य गुरुतल्पत्वोक्तेः । नारदः ( १२।७३–७९ )

" माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ।
"दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता साध्वी धात्री वर्णोत्तमा च या ।
" आसामन्यतमां गच्छन्गुरुतल्पग उच्यते " इति । राज्ञी अभिषिक्तक्षत्रियपत्नी । क्षत्रिया ५
तरपत्न्या लघुप्रायश्चित्तस्य वक्ष्यमाणत्वात् । मातृग्रहणं दृष्टान्तार्थं । अत्र च तादृग्प्यातिदेशेऽति दिश्यमानं प्रायश्चित्तं पादोनं भवतीति स्मृत्यादि परिभाषायामेव । तथाकामत एकरात्रा दूर्ध्वं अत्यन्ताभ्यासविषयं । अत्रैव कामतोऽत्यन्ताभ्यासे तु वृहद्यमः

"रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च । सपिंडापत्यदारेषु प्राणत्यागो विधीयते"॥ इति । चंडाल्यादीनां कामाकामयोः सकृद्गमने यमः १०

" चंडालपुक्कसानां तु भुक्त्वा गत्वा तु योषितां । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैंदवद्वयमिति ' ॥
इदमेव च कुमार्यादिगमनेऽपि ज्ञेयं । वृहद्यमयाज्ञवल्क्याद्येकवचनोपात्तत्वेन तुल्यधर्मत्वात् ।
" बहूनामेकधर्माणामेकस्यापि यदुच्यते । सर्वेषां तद्भवेत्कार्यमेकरूपा हि ते स्मृता " ॥ इति विज्ञानेश्वरादयः । अकामत एकरात्राभ्यासे तु नैवार्षिकं । तथा च मनुः ( ११।१७८ )
" यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विज । तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहतीति " ॥ १५
वृषली चात्र चंडाली । अपरार्कमिताक्षराकल्पतरुभवदेवीयादिषु । तथा च मिताक्षरायां स्मृत्यंतरं

"चंडाली बधकी वेश्या रजस्था या च कन्यका । ऊढा या च सगोत्रा या वृषल्यः पंच कीर्तिताः"॥
इति । शूद्रीति शूलपाणिः । स्मृत्यंतरवाक्यं त्वनाकरमिति मेने । अत्रैकरात्रेणे त्यत्यंतसंयोगवाचिन्या तृतीययाऽभ्यासोऽवगम्यते । कामतः एकरात्राभ्यासे तु द्विगुणं । २०
माधवीये व्याघ्रः

" आश्रितस्यापि विदुषः आहिताग्नेश्च योषितः । आचार्यस्य च राज्ञश्च भार्यां प्रव्रजितां तथा ॥
" धात्रीं पुत्रीं च पौत्रीं च सखीं मातुस्तथैव च । पितुः स्वसां तथा गत्वा गुरुतल्पव्रतं चरेत् "॥
एकरात्रादूर्ध्वं कामतोऽत्यन्ताभ्यासपरमिदं । अस्मिन्नेव विषये मनुः ( ११।१७९ )

"चंडालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छतीति" ॥ २५
अत्राज्ञानशब्दः । ज्ञानतो मरणं ।

" जनन्यां च भगिन्यां च स्वसुतायां तथैव च । स्नुषायां गमनं चैव विज्ञेयमतिपातकं ॥
" अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनं । न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचनेति ' ॥

---

१ ह–चाण्डालोन्त्यस्त्रियो । २ घ–स्वसारं ।

कात्यायनोक्ते । वृद्धहारीऽतोपि " मातृदुहितृभगिनीस्नुषागमनान्यतिपातकानि सद्योऽग्नि-प्रवेशोऽतिपातकिनामिति " । यत्तु संवर्त्तः

" मातरं यदि गच्छेत्तु स्वसृस्नुषा पुरुषाधम । न तस्य निष्कृतिं विद्यात्स्वका दुहितरं तथेति" ॥

भ्रातृभार्यागमने संवर्त्तः

" पितृदारागमने भ्रातृभार्यागमे तथा । गुरुतल्पव्रतं कुर्यान्नान्या निष्कृतिरुच्यते " ॥ इति । एतच्चाकामतो बहुकालाभ्यासविषयं । कामतस्तु मरणान्तिकमेव । यत्तु याज्ञवल्क्यः ( प्रा २२८ ) " अनियुक्तो भ्रातृजाया गच्छन् चान्द्रायण चरेदिति" । तदसवर्णन्यभिचरित-भ्रातृजायाविषयमिति । कनिष्ठभ्रातुर्भार्यागमने चतुर्विंशतिमते

" भ्रातुश्चैव कनिष्ठस्य भार्यां गत्वा तु कामत । कृच्छ्रत्रयं सातपनं प्रकुर्वीताथवाऽपि वेति"॥

आचार्यगमने जातूकर्ण्यः " आचार्यादेस्तु भार्यासु गुरुतल्पव्रतं चरेदिति " । आदि-पदादुपाध्यायादीनां ग्रहणं । यत्तु चतुर्विंशतिमते

" चरेच्चान्द्रायणं विप्रो गत्वोपाध्याययोषितं । आचार्यस्य परां तु बौधायनवचो यथेति "॥

तद्व्यभिचरितोपाध्यायादिपत्नीगमनपरं । यत्तु बृहद्यमः

" चाण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीं । मातापित्रोः स्वसारं च निक्षिप्तां शरणागतां॥

" मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितां । शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेदिति "॥

यत्तु सुमंतुः " मातृष्वसृस्नुषाभागिनेयीगोत्राचाण्डालीगमनेषु तप्तकृच्छ्रत्रयं सातपनं चेति " ॥

यच्चांगिराः

" पतितोऽन्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । मासोपवासं कुर्वीत चान्द्रायणमथापि वेति "॥

यच्च संवर्त्तः

" चाण्डालीं पुल्कसीं म्लेच्छीं श्वपाकीं पतितां तथा । एता गत्वा द्विजो मोहाच्चरेच्चान्द्रायणव्रतं"॥

यच्च हारीतः " गुरुतल्पगो मृन्मयीं स्त्रीप्रतिकृतिमग्निवर्णां कृत्वा तामालिंग्य मृत्युना पूतो भवेत् । एवमेव पितृपत्नीगमने स्वसृमातृपितृष्वसृगमने कन्यासगोत्रास्वस्त्रीयाभगिनीगमन चान्द्रायणं चेति " । तत्र चान्द्रायणं रेतःसेकात्पूर्वं निवृत्तौ ज्ञेयं । यदपि संवर्त्तः

" भगिनी मातुराप्ता च स्वसारं चान्यमातृजा । एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्रं समाचरेत् ॥

" कुमारीगमने चैव व्रतमेतद्विनिर्दिशेत् " । तथा

" गुरोर्दुहितरं गत्वा स्वसारं पितुरेव च । तस्या दुहितरं चैव चरेच्चान्द्रायणव्रतं ॥

"मातुलस्य सुतां गत्वा मातुलानीं सगर्भिणीं । एता गत्वा स्त्रियो मोहात्पराकेण विशुद्ध्यतीति"

ता भगिन्यादिगमनविषयं । यत्तु विष्णुः ( ५३।५ ) " चाण्डालीगमने तत्साम्यमाप्नुयात् । अज्ञानाच्चान्द्रायणं " । यच्च गौतमः " चाण्डालीगमने कृच्छ्राब्दो

१ क–सगर्भिणीं ।

अन्यथा द्वादशरात्र " इति । तत्र साम्यकृच्छ्राब्दयोर्विषय उक्त । चान्द्रायणस्यापि । अज्ञानत सकृदारोहणमात्रे तु द्वादशरात्र । **बौधायनः** " मातृष्वसापितृष्वसाभागिनेयी स्नुषामातुलानीत्यगम्यागमने कृच्छ्रातिकृच्छ्रौ चान्द्रायणमिति " । **संवर्तः**

" *सखिभार्यां समारुह्य श्वश्रूं चैव हि मानव । अहोरात्रोषितो भूत्वा ततःकृच्छ्रद्वय चरेत्* "॥

**चतुर्विंशतिमते** ५

" मातुश्च स्वस्रिया गत्वा पितृव्यतनया तथा । ततःकृच्छ्र प्रकुर्वीत षड्रात्र तत्सुतासु च ॥

" गुरोर्दुहितर गत्वा पराक च समाचरेत् । भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणव्रत ॥

" मातुलस्य सुता गत्वा पितुश्च स्वस्रिया तथा । प्राजापत्य प्रकुर्वीत हारीतवचन यथा ॥

" मातुश्च स्वस्रिया गत्वा भार्या गत्वा तु कामत । पितृव्यतनया चैव सपाद कृच्छ्रमाचरेत् ॥

" दौहित्रीं पुत्रतनया चरेच्चान्द्रायणव्रत । तत्सुता तत्स्नुषा गत्वा पराक तु समाचरेत् ॥ १०

" सभगिन स्त्रिय गत्वा पादकृच्छ्र समाचरेत् । विधवागमने कृच्छ्रमहोरात्रसमन्वित ॥

" आचार्यस्य पराक तु बौधायनवचो यथा ॥

" सखिभार्यां समारुह्य जातिस्वजनयोषित । स कृत्वा प्राकृत कृच्छ्रपाद कुर्यात्तत पुन ॥

" कुमारीगमने विप्रश्चरेच्चान्द्रायणव्रत । पतिता तद्द्विजो गत्वा तदेव व्रतमाचरेदिति " ॥

**बृहन्मनुः** १५

" मातुर्मातृगमने पितृमातृगमे[1] तथा । एतास्त्वकामतो गत्वा द्विजश्चान्द्रायण चरेत् " ॥

**संवर्तः**

" अन्तर्वत्नीं मातुलानीं च स्वसार चान्यमातृजाएता द्विज स्त्रियो गत्वा ततःकृच्छ्र समाचरेत् "॥ इत्याद्यनेकस्मृतिवचनानि तत्रधसन्निकर्षविप्रकर्षापेक्षया योजनीयानि । **गौतमः** (२२।२९ ३२) " द्वे परदारे । त्रीणि श्रोत्रियस्य । द्रव्यलाभे चोत्सर्गो यथास्थान वा २० गमयेदिति " । तथा यद्दत्त धन तदुत्सृष्टव्य । तदीय तत्रैवाप्रत्यर्पणमित्यर्थ । वार्षिक-प्राकृतव्रतमुक्त्वा स एव " उपपातकेषु चैवमिति "(३४) । **यमः** " द्वे वर्षे परभार्यासु त्रीणि श्रोत्रियपत्नीष्विति " । तत्रैव व्यवस्था । ऋतुकाले कामतो जातिमात्रब्राह्मणीगमने वार्षिक । तत्रैव गुणविशेषशालिन्या द्वे वर्षे । तादृश्या एव श्रोत्रियभार्याया गमने त्रीणि वर्षाणीति । अथवा श्रोत्रियगुणवद्ब्राह्मणक्षत्रियादिभार्याविषयत्वेनैतानि व्यवस्थापनीयानि । अत एव २५ **शंखः** " वैश्यायामवकीर्णि सवत्सर ब्रह्मचर्यं त्रिषवण वाऽनुतिष्ठेत् । क्षत्रियाया द्वे वर्षे त्रीणि ब्राह्मण्या वैश्यायाश्च शूद्रायामिति " । वैश्यायाश्चेति ब्राह्मणपरिणीताया । शूद्रपरिणीताया

---

[1] ह्य-गमन इत्यपर पा॰ ।

तु षण्मासिकमेव। शूलपाणिस्तु सच्छूद्र्यां वैश्यवत्। असच्छूद्र्यां षाण्मासिकमित्याह। तेन क्षत्रियागमने द्विवार्षिकमेव। तदाह प्रजापतिः

"विप्रो नृपस्य भार्यायां यत्करोति समागमे। तदेव क्षत्रियस्यापि कुर्यादत्रैव संगमे"॥ इति। एवं क्षत्रियस्य वैश्यादिस्त्रीषु क्रमेण वार्षिकं षाण्मासिकं च। एवं वैश्यस्यापि वैश्याशूद्रयो-

१५ र्वार्षिकषाण्मासिके। शूद्रस्य शूद्र्यां षाण्मासिकमेव। अनुपभुक्तागमने आपस्तंबः

"सवर्णायामनन्यपूर्वायां सकृत्सन्निपाते पादः पतत्येवमभ्यासे पादः पादश्चतुर्थे सर्वमिति"॥ अनुपभुक्तायां एकस्या श्रोत्रियपत्न्यां द्वादशाब्दं। अनन्यपूर्वायामित्युक्तेरेकस्यामेव चतुरभ्यासे नेदं प्रायश्चित्तं किंतु पादपादन्यूनं कल्प्यमिति शूलपाणिविज्ञानेश्वरौ। व्यभिचरितक्षत्रियावैश्यागमने संवर्तः

१० "क्षत्रियां वाऽथ वैश्यां वा गच्छेद्यः काममोहितः। तस्य सांतपनं कृच्छ्रं भवेत्तत्पापमोचकं"॥ तत्सवर्णानुलोमविषयं। यत्तु स एव "विप्रामस्वजना गत्वा प्राजापत्यं समाचरेदिति"। तद्व्यभिचरितब्राह्मणीविषये ब्राह्मणस्य। यत्तु वसिष्ठः (२१।१६) "ब्राह्मणश्चेदप्रेक्षापूर्वकं ब्राह्मणदारानभिगच्छेदनिवृत्तधर्मकर्मणः कृच्छ्रो निवृत्तधर्मकर्मणोऽतिकृच्छ्र"इति। अप्रेक्षा अज्ञानं। निवृत्तधर्मकर्मणो दारानित्यन्वयः। ब्राह्मणस्य स्वैरिण्यां प्रायश्चित्तमाह यमः

१५ "ब्राह्मणो ब्राह्मणीं गत्वा द्विजे दद्यान्मृगाजिनं। क्षत्रियायां धनुर्दद्याद्वैश्यायामायसीं शिलां॥ "शूद्रां गत्वा तथा विप्र उदकुंभं द्विजातये। त्रिरात्रोपोषितः स्नात्वा दद्यात्सम्मार्जनीं तथेति"॥ "अत्र त्रिरात्रोपोषितः स्नात्वेति" प्रत्येकं संबध्यते। एतच्च बंधकीविषयमित्यन्ये। स्वैरिण्यां प्रायश्चित्तांतरमाहतुः शंखलिखितौ "स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नात उदकुंभं ब्राह्मणाय दद्याद्वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत्। क्षत्रियायां

२० त्रिरात्रोपोषितो यवाढकं दद्याद्ब्राह्मण्यां त्र्यहमुपोषितो घृतपात्रं दद्यादिति"। कल्पतरु-कारस्तु 'प्रकीर्णास्वेतमस्वतंत्रास्विति' वाक्यशेषं पपाठ। प्रकीर्णा केनचिदनवरुद्धा। अस्वतंत्रा त्ववरुद्धा। तदेवं द्विविधस्वैरिणीगमनेऽप्येतदेव प्रायश्चित्तमित्यर्थः। शूलपाणिस्तु "स्वैरिण्यां वृषल्यामवकीर्णे" इत्यत्र प्रसूत इति पठित्वा प्रसूत इत्यनेन स्वैरिण्यामपत्यो-त्पादनेऽप्येतदेव प्रायश्चित्तमित्याह। तन्न। तादृशपाठस्य कल्पतरुप्रभृतिष्वदृष्टत्वात्।

२५ गर्भोत्पादने द्विगुणप्रायश्चित्तस्य वक्ष्यमाणत्वाच्च। बंधकीगमने तु षट्त्रिंशन्मते

"ब्राह्मणीं बंधकीं गत्वा किंचिद्दद्याद्द्विजातये। राजन्यां च धनुर्दद्याद्वैश्यां गत्वा तु वैलकं॥ "शूद्रां गत्वा तु वै विप्र उदकुंभं द्विजातये। दिवसोपोषितो वा स्याद्दद्याद्विप्राय भोजनमिति"॥ किंचिदष्टमुष्ट्यात्मकं धान्यं "अष्टमुष्टि भवेत्किंचिदिति" स्मृतेः। प्रायश्चित्तांतरमाह प्रचेताः "बंधकीगमने उपसृश्य प्राणायामं कुर्यात्। ब्राह्मणबंधकीं गत्वा कमंडलुं दद्यात्क्षत्रिय(धर्मी)

---

१ ई–द।

मायुध वैश्यबधकी प्रतोदमिति " । अत्र त्रिषु वर्णत्रयोपादानात्प्रथम शूद्रबधकीपर । स्वैरिणी बधक्योर्लक्षणमुक्त स्मृत्यंतरे " चतुर्थे स्वैरिणी प्रोक्ता पंचमे बधकी मतेति" । महाभारतेऽपि " अत पर स्वैरिणी स्यात्पचमे बधकी तथेति " । यत्तु मनुः ( ३।१७ )

" शूद्रा शयनमारोप्य ब्राह्मणो यात्यधोगर्ति । जनयित्वा सुत तस्या ब्राह्मण्यादेव हीयत " ॥

इति तत्पापगौरवपर । एतानि च प्रायश्चित्तानि गर्भानुत्पत्तिविषयाणि । तदुत्पत्तौ तु यद्विशेषे यत्प्रायश्चित्तमुक्त तदेव तत्र द्विगुण कर्त्तव्य । तथा चोशनाः " गमने तु व्रत यत्स्यादगर्भे तु द्विगुण भवेदिति " । आपस्तंबः ५

" चाडालमेदश्वपचकपालव्रतधारिणा । अकामत स्त्रिय गत्वा पराकव्रतमाचरेत् ॥

"कामतस्तु प्रसूतो वा तत्समो नात्र सशय । स एव पुरुषस्तस्या गर्भो भूत्वा विजायत" ॥ इति ।

कामत प्रसूतो वेति यथा कामतो द्विगुणमुक्त तथा गर्भेऽपीत्यर्थ । चतुर्विंशतिमते तु जातिभेदेन गर्भप्रायश्चित्तविशेष उक्त १०

" ब्राह्मणीगमने कृच्छ्र गर्भे सातपन स्मृत । राज्ञीगर्भे पराक स्याद्विगर्भे तु त्र्यहाधिक ॥

"शूद्रगर्भे द्विज कुर्यात्तद्वच्चान्द्रायण स्मृत । चाडाल्या गर्भमारोप्य गुरुतल्पव्रत चरेदिति " ॥

तत्रैव " वृषल्यामभिजातस्तु त्रीणि वर्षाणि चतुर्थकालसमये नक्त भुञ्जीतेति " । एतच्च कामतोऽत्यताभ्यासेन गर्भोत्पत्तौ । अभिजात । उत्पादितगर्भ । यत्तु हारीतः १५

"ब्राह्मणो वृषलीं गत्वा त्र्यह भवति सूतकी । अथास्या गर्भमाधत्ते ब्राह्मण्यादवकीर्यत " ॥ इति ।

तथा "ब्राह्मणो वृषलीं गत्वा सद्यो गच्छेदधोगर्ति । अथास्या गर्भमाधत्ते पतत्याशु न सशय" ॥

इति । तदेतानि पापगौरवख्यापनपराणि । कण्वः

"प्रसूतो यस्तु वेश्याया भैक्षभुग्नियतेन्द्रिय । शत सहस्रमभ्यस्य सावित्रीमेति शुद्धतामिति " ॥

अत्र ' कैवर्ती रजकीं चापि वेश्या चापि गतो नर । प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यतीति" ॥ २०

शातातपवाक्ये वेश्यासमभिव्याहृतकैवर्त्यादिषु गर्भोत्पादेऽपीदमेव प्रायश्चित्तमिति । प्रातिलोम्यव्यवाये तु शख " प्रातिलोम्ये वध पुसो नार्या कर्णादिकर्त्तनमिति " । वध प्रायश्चित्त दडश्च । नार्या कर्णादिकर्त्तनं तु यथोक्तप्रायश्चित्तमनिच्छत्या । वधे प्रकारविशेषमाह वसिष्ठः ( २१।१९ ) "शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्ब्राह्मण्या शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्ना खरमारोप्य महापथमनुसव्राजयेत्पूता भवतीति विज्ञायते । वैश्यश्चे २५ द्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येद्ब्राह्मण्या शिरसि वपन कारयित्वा सर्पिषाऽभ्यज्य नग्ना गौरखरमारोप्य महापथमनुसव्राजयेत्पूता भवतीति विज्ञायते । राजन्य

१ वसनसयईर-व्याख्यान ।

श्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा क्षत्रियमग्नौ प्रास्येद्ब्राह्मण्या शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते । एवं वैश्यो राजन्यायां शूद्रश्च राजन्यवैश्ययोरिति" । महापथव्राजनं दण्डः प्रायश्चित्तं च । पूतत्वोक्तेरिति मिताक्षरायाम् अपरार्के तु प्रायश्चित्तयोग्येति व्याख्यातम् । एतच्च कामतोऽभ्यास-

५ तस्तु शूद्रस्य मरणमेव लिखितचतुर्विंशत्यब्दाद्र्धं द्वादशाब्दम् । शूद्रस्यैव क्षत्रियावैश्ययोर्नववार्षिकषड्वार्षिके वा । यत्तु वृद्धप्रचेताः

" शूद्रस्य ब्राह्मणीं मोहाद्गच्छत शुद्धिमिच्छतः । पूर्णमेतद्व्रतं देयं म ता यस्माद्धि तस्य सा ॥

" पादहान्यान्यवर्णासु गच्छतः सार्ववर्णिकम् । प्रायश्चित्तमिदं देयमगम्यागमने क्रमात् " ॥

एतद्दिशा वैश्यस्याज्ञानतो विप्रागमने नवाब्दम् । क्षत्रियस्य तु षडब्दम् । एवमेव शूलपाणिरपि ।

१० यत्तु माधवीये संवर्त्तः

" कथंचिद्ब्राह्मणीं गच्छेत् क्षत्रियो वैश्य एव वा । गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति"॥

इति । तदत्यन्तव्यभिचारितायामकामतो गमने ज्ञेयम् । मिताक्षरायां त्वाद्यश्लोकोत्तरार्द्धमेव । " कृच्छ्रं सांतपनं वा स्यात्प्रायश्चित्तं विशुद्धये " इति । रजस्वलागमने प्रायश्चित्तमाह योगी " त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुद्ध्यति " । त्रिरात्रोपवासात् इत्यर्थः ।

१५ इदमकामतः सकृद्गतौ । अत्रैव कल्पतरौ शंखलिखितौ " रजस्वलाबधूताभिगमने त्रिरात्रोपवासो गुडप्राशनं च " । कामतः सकृद्गमने शातातपः " रजस्वलागमने सप्तरात्रमिति " । यत्तु वसिष्ठः " रजस्वलाव्यवाये शुक्लवृषभं दद्यात्कृष्णपिंगलमिति " । यदप्यापस्तंबः "उदक्यां यदि गच्छेत्तु ब्राह्मणो मदमोहितः । प्राजापत्येन शुद्ध्येत ब्राह्मणानां च भोजनादिति"॥ तदकामतोऽभ्यासे कामतः सकृद्गतौ च । कामतोऽत्यन्ताभ्यासे कामतः सकृद्गतौ

२० च । कामतोऽत्यन्तानवच्छिन्नाभ्यासे तु शंखः " पादं तु शूद्रहत्यायामुदक्यागमने तथेति " । कामतोऽभ्यासमात्रे तु संवर्त्तः

" रजस्वलां तु यो गच्छेद्गर्भिणी पतितां तथा । तस्य पापस्य शुद्ध्यर्थमतिकृच्छ्रं विशोधनमिति"॥

दिनभेदात्प्रायश्चित्तविशेषश्चतुर्विंशतिमते

" रजस्वलां तु यो गच्छेत्पराकं तु समाचरेत् । सांतपनं द्वितीयेऽह्नि प्राजापत्यं परेऽहनीति "॥

२५ 'सांतपनो महासांतपनः' इति मदनपारिजाते । यत्तु माधवीये शातातपः " अनुदकमूत्रपुरीषकरणे श्वापाकस्पर्शे सचैलस्नानं महाव्याहृतिहोमश्च रजस्वलागमने चैतदेवेति " । तदकामतः प्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ बोध्यम् । कामतस्त्वेतदेव द्विगुणम् । यत्तु विष्णुना ( ३६।७ )

३६।७) "स्वसु सख्या सगोत्राया उत्तमवर्णाया रजस्वलाया शरणगताया प्रव्रजिताया निक्षिप्ताया्श्च गमनमित्येतान्यनुपातकानी" त्यनेन रजस्वला गमने अनुपातकप्रायश्चित्तमुक्त तच्छ्रोत्रियपत्न्या कामतोऽत्यतानवृच्छिन्नाभ्यासविषय । एतानि च रजस्वलान्तर्वत्न्यादिगमनप्रायश्चित्तानि स्वपत्न्यामेव । परपत्न्या तु तादृश्या पारदार्य्यप्रायश्चित्तैर्विजातीयै समुच्चीयते । साजात्ये तु अधिकेन न्यूनस्य प्रसगसिद्धि । साम्ये तु तत्रमिति । एव विधवादिगमनेऽपि योज्य । तत्र प्रायश्चित्त चतुर्विंशतिमते

" विधवागमने कृच्छ्रमहोरात्रसमन्वित । व्रतस्थागमने कृच्छ्र सपाद तु समाचरेत् " ॥

अथात्यजागमनप्रायश्चित्तं । आपस्तंबः

" रजकश्चर्मकारश्च नटो बुरुड एव च । केवर्त्तमेदभिल्लाश्च सप्तैते त्वत्यजा स्मृता " ॥

बृहत्संवर्त्तः "रजकव्याधशैलूषवेणुचर्मोपजीविनी । एतास्तु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयमिति"॥ १०

आपस्तंबः

"म्लेच्छी नटी चर्मकारी रजकी बुरुडी तथा । एतासु गमन कृत्वा चरेच्चान्द्रायणद्वयमिति"॥

इद च विप्रस्य कामत सकृद्गमने । क्षत्रियादेस्तु पादपादहीन कल्प्य । संवर्त्तः

" रजकव्याधशैलूषवेणुचर्मोपजीविना । स्त्रियो विप्रो यदा गच्छेत्कृच्छ्र चान्द्रायण चरेदिति"[१]॥

तदकामत । अत्रैवाहापस्तंबः १५

"चडालमेदश्वपचकपालव्रतचारिणा । अकामत स्त्रियो गत्वा पराकव्रतमाचरेदिति"॥ यदूशनाः

"कापालिकान्नभोक्तृणा तन्नारीगामिना तथा । ज्ञानात्कृच्छ्राब्दमुद्दिष्टमज्ञानादैदवद्वय" ॥

तत्कामतोऽभ्यासे । यत्तु शातातपः

" कैवर्त्ती रजकी चैव वेणुचर्मोपजीविनी । प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यतीति " ॥

तच्छूद्रपर । अस्मिन्नेव विषये द्विस्त्रिगमनाभ्यासे हारीतः २०

" कैवर्त्ती ध्वजिनी चैव याश्चान्या अत्यसभवा । कामतस्तु व्रतान्विप्र एतानेव समाचरेत् ॥

" द्वौ मासौ भैक्ष्यभक्षेण द्वौ मासौ यवयावकै । द्वौ मासौ पचगव्येन षण्मासाश्चरित्वन ॥

" एव शुद्धिमवाप्नोति प्रायश्चित्तानुरोधत " इति ॥ ये त्वत्यावसायिनश्चाडालादयस्तेषा स्त्रीगमने गुरुप्राश्चित्तमुक्त गुरुतल्पातिदेशो । एतासा च रजकाद्यंत्यजस्त्रीणा मध्ये यदेकस्या व्यवाये प्रायश्चित्तमभिहित तत्सदृशत्वात्सर्वासु भवति । तथा चोशनाः २५

" बहूनामेकधर्माणामेकस्यापि यदुच्यते । सर्वेषा तद्भवेत्कार्य्यमेकरूपा हि ते स्मृता"॥ इति ।

एतासु गर्भोत्पत्तौ तु विशेष उक्त उशनसा "चाडाल्या गर्भमारोप्य गुरुतल्पव्रत चरेदिति" । एतच्च व्रतातिदेशात्त्वब्द । तच्चाकामत पुनरापस्तंबः

" अत्यजाया प्रसूतस्य निष्कृतिर्न विधीयते । निर्वासन कृत्वाकस्यतस्य कार्य्यममराय" ॥ इति ।

अथ स्त्रीणां व्यभिचारे प्रायश्चित्तं । मनुः ( ११।१७६ ) " यत्पुंस परदारेषु ३०

---

[१] खअघड-जीविना, ग-जीविनी ।

तच्चैनां चारयेद्व्रतमिति "। एतच्च वाचनिकातिदेशात्पादोनमिति केचित्। पूर्णमेव तु युक्तं। तथा च बृहस्पतिः

" यत्पुंसः परदारेषु समानेषु विधीयते। व्यभिचारेऽपि भर्त्तुः स्त्री तद्दोषं समापयेदिति "॥

समानेष्वित्यनुलोमानामप्युपलक्षणार्थं। तच्च प्रातिलोम्यव्यवायव्यावृत्यर्थं। तत्र गुरुप्रायश्चित्तोक्तेः। भर्त्तुः पुंसः। अव्यवस्थितकल्पना त्वन्याय्यैवेति। अतश्च सवर्णानुलोमव्यवाये स्त्रीपुंसयोरौत्सर्गिकं तुल्यं प्रायश्चित्तं। तस्य क्वचिदपवादस्तथा च संवर्त्तः

" बलात्प्रमथ्य भुक्ता चेदहृष्यमानेन चेतसा। प्राजापत्येन शुद्धिः स्यात्तत्तस्याः पावनं परमिति"॥

पराशरोऽपि ( १०।२६ )

" सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः। प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन वेति"॥

१० बृहस्पतिरपि

" अनिच्छन्ती तु या भुक्ता गुप्तां तां कारयेद्गृहे। मलिनांगीमधःशय्यां पिंडमात्रोपजीविनीम्॥

"कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समं गतां। हीनवर्णोपभुक्ता या त्याज्या वध्याऽपि या भवेदिति"॥

समं समानजातीयं। अत्र सकृदुपगमे कृच्छ्रः द्विरभ्यासे पराकः। अभ्यासे तु चांद्रायणं। तदाहोशनाः " व्यभिचारिणीं भार्यां कुचैलपिंडगुप्तां निवृत्ताधिकारां चांद्रायणं पराकं

१५ प्राजापत्यं चारयेदिति "। मनुः ( ११।१७७ )

"सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपयंत्रिता। कृच्छ्रं चांद्रायणं चैव तदाऽस्याः पापशोधनमिति"॥

इदं चाकामतः। कामतस्तु द्विगुणं। यत्तु ऋष्यशृंगः

"बलेन कामिता नारी सवर्णेन कथंचन। प्रायश्चित्तं त्रिरात्रं वै तस्याः शुद्ध्यर्थमादिशेदिति"॥

तद्रेतःसेकात्प्राङ्निवृत्तौ द्रष्टव्यं। पराशरोऽपि ( १०।२९ )

२० "बंदिग्राहेण या भुक्ता हत्वा बध्वा बलाद्भयात्। कृत्वा सांतपनं कृच्छ्रं शुद्ध्येत्पाराशरोऽब्रवीत् "॥

इच्छया प्रवृत्तौ तु तस्याः पुंतुल्यमेव प्रायश्चित्तं। तदाहतुः शंखलिखितौ

"इच्छया व्यभिचारिणी परदारेषु पुंसो विहितमेनां चारयेदिति"। अंगिराः

"व्रतं यच्चोदितं पुंसां पतितस्त्रीनिषेवणात्। तचापि कारयेन्मूढां पतिताऽऽसेवनात्स्त्रियमिति "॥

आसेवनादिति छेदः। एतच कामतः। अकामतस्त्वाह संवर्त्तः

२५ " ब्राह्मण्यकामाद्गच्छेच्चेत्क्षत्रियं वैश्यमेव च। गोमूत्रयावकैर्मासात्तदर्द्धाच विशुद्ध्यति॥

"ब्राह्मण्याः शूद्रसंपर्के कथंचित्समुपागते। चांद्रायणेन शुद्धिः स्यात्तत्तस्याः पावनं स्मृतमिति"॥

शूलपाणिस्त्वनिच्छतीविषयमेतदिति मासादिति वैश्ये क्षत्रिये त्वर्द्धमिति। षट्त्रिंशन्मतेऽपि " ब्राह्मणी क्षत्रियवैश्यसेवायामतिकृच्छ्रं कृच्छ्रातिकृच्छ्रौ चरेत। क्षत्रिययोषितो

३० ब्राह्मणराजन्यवैश्यसेवायां कृच्छ्रार्द्धं प्राजापत्यमतिकृच्छ्रं च वैश्ययोषितो ब्राह्मणराजन्यवैश्य-

१ घ—कारयेत्। २ घ—पापा।

सेवाया कृच्छ्रपाद कृच्छ्रार्द्धं प्राजापत्य च । शूद्राया शूद्रसेवने प्राजापत्य ब्राह्मणराजन्य-वैश्यसेवाया त्वहोरात्र कृच्छ्रार्द्धमिति" । बृहत्प्रचेताः

" विप्रा शूद्रेण सयुक्ता न चेत्तस्मात्प्रसूयते । प्रायश्चित्त स्मृत तस्या कृच्छ्र चाद्रायणत्रय ॥

" चाद्रायणे द्वे कृच्छ्रश्च विप्राया वैश्यसगमे । कृच्छ्रचाद्रायणे स्याता तस्या क्षत्रियसगमे ॥

" क्षत्रियाशूद्रसपर्के कृच्छ्र चाद्रायणद्वय । चाद्रायण सकृच्छ्रतु चरेद्वैश्येन सगता ॥ ५

" शूद्र गत्वा चरेद्वैश्या कृच्छ्र चाद्रायणोत्तर । आनुलोम्येन कुर्वीत कृच्छ्रपादावरोपितामिति" ॥

'न चेत्तस्मात्प्रसूयत' इति सर्वत्र सबध्यते ।

"ब्राह्मणक्षत्रियविशा भार्या शूद्रेण सगता । अप्रजाता विशुद्ध्यति प्रायश्चित्तेन नेतरा " ॥ इति **वसिष्ठोक्तेः** ( २१।१२ )। पादाऽवरोपित पादहान्या । शूद्या शूद्रगमने यत्प्रायश्चित्त तद्विट्क्षत्रियवैश्यगमनपादार्द्धत्रिपादोन भवति । एव वैश्याया यद्वैश्यगमन उक्त तत्क्षत्रिय- १० विप्रगमने पादोनमर्द्ध च भवति । क्षत्रियाया यत्क्षत्रियगमने तद्विप्रगमने पादोनमित्यर्थ ।

**गर्भोत्पत्तौ तु चतुर्विंशतिमते**

" विप्रगर्भे पराक स्यात् क्षत्रियस्य तथैव । ऐदव च पराक च वैश्यस्याकामकारत ॥

"शूद्रगर्भे भवेत् त्यागश्चाडालो जायते यत । गर्भस्रावे धातुदोषैश्चरेच्चाद्रायणत्रय " ॥ एतच्च कामकारत इति विशेषणादकामत । कामत पुन पराकादिद्विगुण कुर्यात् । गर्भस्राव इति १५ शूद्रगर्भस्रावे । यदा तु सपूर्णशूद्रगर्भस्य प्रसवस्तदा प्रायश्चित्ताभाव । "अप्रजाता विशुद्ध्यति प्रायश्चित्तेन नेतरा " इति **वसिष्ठोक्तेः** । यदा त्वाहितगर्भैव व्यभिचरति तदा गर्भपातशकया प्रसवोत्तरकालमेव प्रायश्चित्त कार्य । तदुक्त **मिताक्षरायां स्मृत्यंतरे**

" अतर्वत्नी तु या नारी समेनोक्रम्य कामिता । प्रायश्चित्त न कुर्यात्सा यावद्गर्भो न निःसृत ॥

" जाते गर्भे व्रत कुर्यात्पश्चान्मास तु यावक । न गर्भदोषस्तत्रास्ति सस्कार्य स यथाविधिरिति" ॥ २०

अत्यजगमनेऽपि स्त्रीणा प्रायश्चित्तमुक्त **स्मृत्यंतरे** ।

" चाडाल पुल्कस म्लेछ श्वपाक पतित तथा । ब्राह्मण्यकामतो गत्वा चाद्रायणचतुष्टय " ।

तथा "रजकव्याधशैलूषवेणुचर्मोपजीविन । ब्राह्मण्येतान्यदा गच्छेदकामान्दिवद्वयमिति " ॥ (१०।१९।१०)"चडालेन तु सपर्कं यदि गच्छेत्कथचन । सशिख वपन कुर्याद्भुजीयाद्यावकौदन॥

" त्रिरात्रमुपवास स्यादेकरात्र जले वसेत् । आत्मना समिते कूपे गोमयोदककर्दमे ॥ २५

" तत्र स्थित्वा निराहारा सा त्रिरात्र तत क्षिपेत् । शखपुष्पीलतामूल पत्र वा कुसुम फल ॥

" क्षीर सुवर्णसमिश्र क्वाथयित्वा तत पिबेत् । एकभक्त चरेत्पश्चाद्यावत्पुष्पवती भवेत् ॥

" बहिस्तावच्च निवसेद्यावच्च इति तद्व्रत । प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजन ॥

"गोद्वय दक्षिणा दद्याच्छुद्धचै स्वायभुवोऽब्रवीदिति " ।एतच्चाज्ञानविषय । कामत सकृद्गमने तु **ऋष्यशृंगः** " सकृत्का स्यादथात्यैर्या सा कृच्छ्राब्द समाचरेदिति " । कामतोऽत्यतसपर्के ३०

तूशनाः

" अंत्यजेन तु संपर्के भोजने मैथुने कृते । प्रविशेत्संप्रदीप्ताग्नौ मृत्युना सा विशुद्धयतीति "।

यत्तु शातातपः

" म्लेच्छेनाधिगता शूद्रा अकामा या कथंचन । कृच्छ्रत्रयं प्रकुर्वीत ज्ञाने तु द्विगुणं भवेदिति"॥

९ अत्र च म्लेच्छग्रहणमेकवाक्योपात्तानां चांडालादीनामप्युपलक्षणं । ' बहूनामेकधर्माणामि ' त्युशनसो वाक्यात् । यत्तु संवर्त्तः

" चांडालं पुल्कसं म्लेच्छं श्वपाकं पतितं तथा । एतान् गत्वा स्त्रियः श्रेष्ठाः कुर्युश्चांद्रायणं परमिति"।

तदकामतोऽप्रवृत्तस्य रेतःसेकात्प्राङ्निवृत्तौ द्रष्टव्यं ।

आहितगर्भायाश्चांडालादिव्यवाये तु ऋष्यशृंगः

१० " अंतर्वत्नी तु युवतिः संसृक्ता चांत्ययोनिना । प्रायश्चित्तं न सा कुर्याद्यावद्गर्भो न निस्सृतः॥

" न प्रचारं गृहे कुर्यान्न चांगेषु प्रसाधनं । न शयीत समं भर्त्रा न वा भुंजीत बांधवैः ॥

" प्रायश्चित्तं गते गर्भे विधिं कृत्वाऽऽब्दिकं चरेत् । हिरण्यमथवा धेनुं दद्याद्विप्राय दक्षिणामिति"।

मानसिकवाचिकव्यभिचारयोः प्रायश्चित्तमाह वसिष्ठः ( २१।६–८ )

" मनसा भर्त्तुरतिचारे त्रिरात्रं यावकं क्षीरोदनं वा भुंजाना अधःशयीत ऊर्द्ध्वं त्रिरात्रादप्सु

१५ निमग्नायाः सावित्र्या चतुर्भिरष्टशतैः शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते । वाक्संबंधे एतदेव मासं चरित्वा ऊर्ध्वं मासादप्सु निमग्नायाः सावित्र्या चतुर्भिरष्टशतैः शिरोभिर्जुहुयादिति"॥

अष्टाधिकं शतमष्टशतं । तैश्चतुर्भिः शिरसीत्यर्थः । इदं च मानसिकव्यभिचारे प्रायश्चित्तं रजोदर्शनादर्वाग्व्यवहार्यत्वसिद्धये । रजोदर्शने तु सति तेनैव शुद्धिः ॥ तथा च मनुः (५।१०७)

" मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुद्धयति । रजसा स्त्री मनोदुष्टा सन्यासेन द्विजोत्तम"॥

२० इति । अंत्यजादिव्यवाये तु पराशरः " हीनवर्णोपभुक्ता या त्याज्या वध्याऽपि वा भवेदिति " । अंकनपक्षे त्याग एव

" चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुंगितोपगता च येति "।

वसिष्ठोक्तेः ( २१।१० ) । जुंगितः प्रतिलोमजः । अत्र च विशेषविधानात् परित्यागो गृहान्निर्वासनमेव । अन्यत्र तु " विप्रदुष्टां स्त्रियं भर्त्ता निरुध्यादेकवेश्मनीति " (२१।१०६)

२५ मनूक्तो विरोधः । याज्ञवल्क्योऽपि ( आ. ७० )

" हृताधिकारां मलिनां पिंडमात्रोपजीविनीं । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीमिति "।

अत्र च वासनं वैराग्यजननार्थमेव । यत्तु चतुर्विंशतिमते

" स्त्रीणां नास्ति परित्यागो ब्रह्महत्यादिभिर्विना । तत्रापि गृहमध्ये तु प्रायश्चित्तानि कारयेत् ॥

" परित्यक्ता चरेत्पापं वल्लभे वाऽपि किंचन । तत्पापं शतधा भूत्वा बांधवाननुगच्छतीति "॥

३० तद्गर्भानुत्पत्तिपरं । तदुत्कायास्तु परित्यागमाह पराशरः ( १०।१० )

१ ख—मि । २ ख—मि ।

" जारेण जनयेद्गर्भं मृते व्यक्ते गते पतौ । तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीमिति " ॥
अपरे राष्ट्र इत्युक्ते गृहान्निष्कासनं गम्यते । अत एव **चतुर्विंशतिमते**
" चतस्र एव संत्याज्याः पतने सत्यपि स्त्रियः । श्वपाकोपहता या तु भर्तृघ्नी पतिपुत्रगेति " ॥
अत्र च शिष्यगादीनां त्यागो गर्भविषय एव
" व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते । गर्भभर्तृवधादौ च तथा महति पातके " ॥ ५
इति **योज्ञवल्क्योक्तेः** ( आ. ७२ )। गर्भः शूद्रादिकृतः ।
"ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः । अप्रजाता विशुद्ध्यंति प्रायश्चित्तेन नेतरा" इति
**वसिष्ठस्मरणात्** ( २१।१२ ) । शूद्रग्रहणं प्रतिलोमजोपलक्षणार्थं तत्रैवर्णिकव्यावृत्त्यर्थं ।
तेन शिष्यगागुरुगयोरपि त्रैवर्णिकयोः प्रसवेन त्यागः । अयं च त्यागो न गर्भमात्रे
किंतु प्रसवमात्र इति प्राग्व्याख्यातं । अयमेवाभिप्रायो **माधवाचार्याणां** । **मिताक्षरायां** १०
तु व्यवहारनिरोध एव त्यागशब्देनोक्तो न तु गृहान्निर्वासनमपीति ।

इति स्त्रीप्रायश्चित्तं ॥

अथ **पशुगमने शंखलिखितौ** " तिर्यग्योनिषु गोवर्जं सचैलस्नातो यवसभारं दद्यात् " ।
इदमकामतः । कामतस्तु **जाबालः** " इतरेषां पशूनां तु कृच्छ्रपादो विशोधनमिति " ।
कामतोऽभ्यासे **संवर्त्तः** " पशुवेश्याभिगमने प्राजापत्यं विधीयते " । शुनीगमने विशेष- १५
**श्चतुर्विंशन्मते** " शुनीं चैव द्विजो गत्वा अतिकृच्छ्रं समाचरेदिति " । यत्तु **गौतमः**
( २३।१६ ) " अमानुषीषु गोवर्जंस्त्रीषु गमने कूष्मांडैर्घृतहोम " इति तत्कामाकामसकृ-
दभ्यासेष्वष्टाविंशत्यष्टोत्तरशताष्टोत्तरसहस्रादिसंख्यया योज्यं ।

अथ **गोगमने** । **पराशरः** (१०।११) । " गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे दद्यात् " ।
इदमकामतः सकृद्गमने । कामतो **विष्णुः** (५३।२) " गोव्रतं गोगमने च " । कामतोऽभ्यासे २०
तु **शंखलिखितौ** " गोष्ववकीर्णः संवत्सरं प्राजापत्यं चरेदिति " । यत्तु **गौतमः**
"गवि गुरुतल्पसम" इति तज्ज्ञानादाजन्माभ्यासे । अथ **व्रतलोपे** । **योगीश्वरः** (आ.२८०)
" अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितं । गर्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति " ॥

**मनुः** ( ११।११८–११९ )
" अवकीर्णी तु काणेन गर्दभेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥ २५
" हुत्वाऽग्नौ विधिवद्धोमानंततश्च समित्यृचा । वातेंद्रगुरुवह्नीनां जुहुयात्सर्पिषाऽऽहुतीः ॥
" एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनं । सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्त्तयन् (१२२) ॥
"तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकं । उपस्पृशंस्त्रिषवणमब्देन स विशुद्ध्यति" (१३)॥
पाकयज्ञविधानं । अथ पशुकल्प इत्याश्वलायनाद्युक्तं । अत्राहुतीरिति बहुवचना-

१ घयईर-स्त्रीगमने

त्कपिंजलन्यायेनाहुतित्रयमेव ज्ञेयं। वसिष्ठोऽपि। (२३।१–६) "ब्रह्मचारी चेत्स्त्रिय-मुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत्। नैर्ऋतं वा चरुं निर्वपेत्। तत्र तस्य जुहुयात्। कामाय स्वाहा। कामकामाय स्वाहा। रक्षोदेवताभ्यः स्वाहेति"। अत्र गर्दभयागात्पूर्वं वायवे स्वाहेत्यादिचतुर्भिराज्यहोमः। गर्दभयागोत्तरं समासिंचन्त्वित्यृचा

५ होम इत्यपरार्के। अत्र पशोरसंभवे चरुरिति विज्ञानेश्वरः। 'श्रोत्रियस्य पशुः श्रोत्रियस्य चरुरिति' माधवः। अयं चामावास्यायां कार्यः। तथा च तैत्तिरीयश्रुतिः "यो ब्रह्मचार्यवकिरेदमावास्यायां रात्र्यामग्निं प्रणीयोपसमाधायेत्यादि"। एतच्च कामत एव। 'कामतो रेतसः सेकमिति' निमित्तवाक्ये मनूक्तेः (११।१२०)। अत्राशक्तस्य तथा प्रोत्साहितस्य वा योगीश्वरोक्तो गर्दभयाग एव। शक्तस्य तु मनूक्तयागाब्दिकव्रतयोः

१० समुच्चयः। समुच्चयमेवाह गौतमः (२३।१७) "गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत्। तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्त गृहान् भैक्षं चरेत् कर्माचक्षाणः संवत्सरेण शुद्ध्येदिति"। इदं च वार्षिकं व्रतमश्रोत्रियविप्रपत्न्यां श्रोत्रियवैश्यपत्न्यां च। यत्तु शंखलिखितौ "गुप्तायां वैश्यायामवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत् क्षत्रियायां द्वे वर्षे ब्राह्मण्यां त्रीणि वर्षाणीति" तद्ब्राह्मणीक्षत्रिययोः श्रोत्रियभार्ययोरविकरणे ज्ञेयं। यत्तु

१५ पैठीनसिः "अवकीर्णी गर्दभाजिनं वसेत्संवत्सरं प्राजापत्यं चरेदिति" तन्मान्य-शूद्रभार्याविषयं। स्वैरिण्यादिभिरवकिरणे त्वाहतुः शंखलिखितौ "स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नात उदकुम्भं दद्यात्। ब्राह्मण्यां वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत्। यवसभारं च गोभ्यो दद्यात्। क्षत्रियायां त्रिरात्रमुपोषितो घृतपात्रं दद्यात्। ब्राह्मण्यां षड्रात्रमुपोषितो गां दद्यात् गोष्ववकीर्णः प्राजापत्यं चरेत्। षण्ढायामवकीर्णः पलालभारं

२० सीसकमाषकं च दद्यादिति"। कल्पतरौ हारीतः "तस्मात्स्त्र्यप्यवकीर्णः निर्ऋत्या एव चतुष्पथे गर्दभं पशुमालभेत्। भूमौ पशुपुरोडाशश्रपणमवदानैः प्रचर्य प्राक् स्विष्टकृत आज्यस्य जुहोति। कामावकीर्णोऽस्मि कामकामाय स्वाहा कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहा। कामाभिवृद्धोऽस्म्यभिवृद्धोऽस्मि कामकामाय स्वाहा। कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा।

२५ "समासिंचंतु मरुतः समिन्द्रः संबृहस्पतिः। समायमग्निः सिंचतु यशसा ब्रह्मवर्चसेनेति" तां छवीमूर्ध्ववालां परिधाय मृन्मयं पात्रमादाय सप्तागारं भैक्षं चरेत्। स्वकर्म परिकीर्तयन् त्रयोदशे मासे पूतो भवतीति"। छवी चर्म। विशेषमाह बौधायनः (२।२९–३१) "यो ब्रह्मचारी स्त्रियमुपेयात्सोऽवकीर्णी गर्दभपशुमालभेत्। नैर्ऋतः पशुपुरोडाशो रक्षोदेवतो यमदैवतो वा मिश्रात्प्राशित्रमप्स्ववदानैश्चरंतीति विज्ञायते। अथावकीर्ण्यमावास्यायामग्निमुप-

३० समाधाय सम्यक् परिस्तीर्य दार्विहोमिकीं परिचेष्टां कृत्वा द्वे आहुती जुहोति कामावकीर्णोऽ-

---

१ झ–चारेत्। २ घयर–श्रवणम्। ३ इक्ष–वर्षे। ४ यरघ–संवदी। ५ झ–या। ६ झ–र्षि। ७ झ–प्य। ८ यरघ–चेष्ट।

स्यवकीर्णोऽस्मि कामकामाय स्वाहा कामायाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा इति हुत्वा करौ तिर्यगभिमंत्रयेत् समासिंचत्विति " । परिवेष्टेतिकर्त्तव्यता स एव "अथ ब्रह्मचर्यव्रतमवकिरेन्मांसं वाऽश्नीयात्स्त्रियं चोपेयात्सर्वास्वार्तिष्वंतरागारेऽग्निमुपसमाधाय संपरिस्तीर्य्य प्रायश्चित्ताज्याहुतीर्जुहोति । कामेन कृतं कामः करोति कामायैवेदं सर्वान् योगान् कारयति तस्मै स्वाहा । मनसा कृतं मन्युत एवेदं सर्वोऽयं.कारयति तस्मै स्वाहा । जयाप्रभृति- सिद्धमाधेनुवरप्रदानात् । अपरेणाग्निं कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्नाभावृत्य वसति व्युष्टायां जघनादात्मानमपकृष्य तीरं गत्वा स्नात्वा आचम्याभिमंत्र्यौब्लिंगाभिर्वारुणीभिर्हिरण्य- वर्णाभिः पावमानीभिरिति मार्जयित्वांतर्जलगतोऽघमर्षणेन षोडश प्राणायामान् धारयित्वो- त्तीर्य्य वास.पीडयित्वाऽन्यद्धौतं वासः परिधायाचम्य प्रसिद्धमादित्योपस्थानं कृत्वा आचार्यस्य गृहानेति । जयापदेन जयाहोमाः प्रभृति नाग्निर्भूतानामधिपतिरित्यादिसाध्याः होमाः । अतो जयाहोमाद्धेनुवरप्रदानांतमत्र कुर्यादित्यर्थः । अपरेणाग्निमग्निपाश्चिमभागे वसतीत्यस्यामे रात्राविति शेषः । व्युष्टायामिति उषःकाले जघनात्कृष्णाजिनजघनप्रदेशादात्मानमपकृष्य निःसार्येत्यर्थः । शंखलिखितौ " सर्वरात्रेणावकीर्येद्दैक्षाग्निकार्ये कुर्वन्सद्यः कामादुत्सर्गे रेतसोऽन्यत्र स्वप्नात्तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयादोंपूर्विकाभिः संवत्सरं वा नक्तं भैक्षं चरेत् । चतुर्थकाले मितभुक् गायत्रीं वा सवनानुगा जपेदिति" । महाव्याहृतिहोमोऽत्र लुत्वा- दैक्ष.ग्निकोपाकरणे । संवत्सरं वेत्यादिना च प्रायश्चित्तद्वयमुक्तं तत्पूर्वोक्तसंवत्सरव्रतसमानविषयं । वत्सरानुगां वत्सरपर्यंतमित्यर्थः । स्वप्ने रेतस उत्सर्गे मनुविष्णू (वि.२८।५१ म.२।१८१) " स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्"।। दिवा स्वप्ने उत्सर्गे बलादुत्सर्गे च नैर्ऋतयागमात्रं " एतदेव रेतस उत्सर्गे दिवा स्वप्ने वेति " वसिष्ठेन यागमात्रातिदेशात् ।कृच्छ्रचांद्रायणादिव्रतांतरेष्वतिदिष्टब्रह्मचर्य्येषु रेत.स्कंदनेऽपीदमेव । ' व्रतांतरेषु चैवमिति ' तेनैवातिदिष्टत्वात् । इदमेव च दीक्षितस्यापि ।

वानप्रस्थयत्योरपि रेतःस्कंदने आह शाण्डिल्यः

"वानप्रस्थो यतिश्चैव स्खंडने सति कामतः । पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत् " ।।

इदं च ब्रह्मचर्य्यातिदेशोऽवकीर्णिव्रतं गुरुत्वात् परस्त्रीगमन एव । कश्यपः

" सूर्यस्य त्रिर्नमस्कारं स्वप्ने सिक्त्वा गृही चरेत् । वानप्रस्थो यतिश्चैव त्रिः कुर्यादघमर्षणं"।।

स्त्रीसंभोगमंतरेण कामादुत्सर्गे तु कण्वः

" यत्रोत्सर्गं गृही कृत्वा वारुणीभिरुपस्पृशेत् । वानप्रस्थो यतिश्चैव चरेच्चांद्रायणत्रयं " ।।

१ ईनघ गम्निम । २ घईयर-समाहृत्य । ३ झ-भज्या । ४ झ-धराजेण । ५ घयर-कार्यकरणे । ६ झ-नैर्ऋतमात्रं ।

सप्तरात्रं संध्यादि । त्यागेनावकीर्णत्वे तु बृहस्पतिः
" संध्योपासनमुद्दिष्टं प्रथमं ब्रह्मचारिणः । अग्नींधनं भैक्षचर्या चैतत्कुर्वीत प्रत्यहं ॥
" अस्य त्रयस्य करणाद्धती रोगविवर्जितः । अवकीर्णिव्रतं कुर्यात्सप्तरात्रं न संशयः " ॥
याज्ञवल्क्योऽपि ( प्रा. २८१ )
५ " भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः । कामावकीर्ण इत्याभ्यां हुत्वा चाज्याहुतिद्वयं ॥
" उपस्थानं ततः कुर्यात्समासिंचत्वनेन तु " ॥ कामावकीर्ण इत्येतौ पूर्वमुक्तौ समासिंचत्विति
च । इदं च कार्यव्यासंगादिनाऽन्यादित्यागे । तदभावे तु
" अकृत्वा भैक्षचरणमसमिध्य च पावकं । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेदिति " ॥
मनूक्तं ( २।१८७ ) बोध्यं । नैष्ठिके विशेषमाह हारीतः
१० " उपकुर्वाणस्तु यत्कुर्यात्कामतोऽकामतोऽपि वा । तदेव द्विगुणं कुर्याद्ब्रह्मचारी तु नैष्ठिक"॥इति।
एतानि चावकीर्णिप्रायश्चित्तानि त्रैवर्णिकस्यापि ब्रह्मचारिणः समानानि ।
"अवकीर्णी द्विजो राजा वैश्यश्चापि खरेण तु।इष्ट्वा भैक्षाशिनो नित्यं शुद्ध्यंत्यब्दात्समाहिताः"॥
इति शांडिल्योक्तेः । द्विजो विप्र । अत्र यदगम्यागमनप्रायश्चित्तमेतत्प्रायश्चित्तात्समं
न्यूनं वा तदनेनैव सिद्धिः । यत्त्वधिकं तेनैव तस्य सिद्धिः । गर्दभयागस्तु पृथगेव कार्य
१५ इति । ब्रह्मचारिणो वेदव्रतान्याम्नातानि । तेषां लोपे प्रायश्चित्तमाहाश्विः
" पिता भ्राताऽपरो वाऽपि प्राजापत्यत्रयं चरेत् । महापगास्तु सस्नाप्य पाहि नो अग्न आहुतीः ॥
" पंचभिरिदमाहातव्रतलोपे कृते सतीति " । संवत्सरमध्य एव व्रतलोप एतत्प्रायश्चित्तमिति
केचित् । महानाम्न्यादिव्रतलोपे प्रायश्चित्तपूर्वकं तानि समावर्तनदिन एव कार्याणीति
प्रयोगपारिजाते । व्यासोऽपि
२० " वेदव्रतानि कृत्वैवं तथैवारण्यकव्रतं । स्वशाखाविहितं सर्वं कृत्वा वेदमुपक्रमेत् ॥
" अकृत्वेमानि सर्वाणि वेदो वाऽभ्यस्यते यदि । प्रायश्चित्तानि कृत्वैव व्रतान्यपि तथा क्रमात् ॥
" गोदानिकं ततः कृत्वा समावर्तनमारभेदिति " । तत्र प्रायश्चित्तमाह शौनकः
" व्रतानि विधिवत्कृत्वा स्वशाखाध्ययनं चरेत् । अकृत्वाऽभ्यस्यते येन स पापी विधिघातकः ॥
"कृत्वा द्वादश रात्रं तु चारित्वाऽऽज्याहुतीः शतं।हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः"॥
२५ देवलोऽपि व्रतानुपक्रम्य
" कालातिक्रमणे कुर्यात्प्रायश्चित्तं विधानतः । कृच्छ्रं द्वादशरात्रं तु हुत्वा चाज्याहुतीः शतं ॥
" अष्टाविंशतिमष्टौ वा क्रमात्कुर्याद्व्रतानि हि । व्यत्यये यावदभ्यस्तं वेदं तावत्पुनः पठेदिति" ॥
एतच्च कामतः । रागादावबुद्धिपूर्वे त्यागे तु मनुः ( २१।२०३ )
" वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति " ॥
३० इति व्रतलोपप्रायश्चित्तं ।

अथ परिवेदने मनुः ( ३।१७१ )

१ ख—कमतः । २ ई—भ्यस्ते यत्र स पापी विधिघातकः ३ घवल—अत्यंकं कृच्छ्रमेकैकं ।

" दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः " ॥
गार्ग्योऽपि
"सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहं । आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेदिति "॥
सोदर्यग्रहणादसोदर्य्ये न दोषः । तदाह शातातपः
" पितृव्यपुत्रसापत्नपरनारीसुतेषु च । ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातृणां तु कनीयसां ॥ ५
" दाराग्निहोत्रसंयोगे न दोषः परिवेदने " । परनारीसुताः क्षेत्रजदत्तकाद्याः । पुत्रदानेन प्रतिगृहीतृकुले पितृत्वपुत्रत्वादिप्रयुक्तकार्य्यप्रवृत्तिर्जनककुले च तन्निवृत्तिः सप्रमाणमुक्ता व्यवहारमयूखे । तेन दत्तकसोदरस्यापि कनिष्ठस्य दत्तकमुक्रम्योद्वाहे न दोषः । शातातपः
" क्लीबे देशांतरस्थे च पतिते भिक्षुकेऽपि वा । योगशास्त्राभियुक्ते च न दोषः परिवेदने " ॥ १०
भिक्षुको यतिः । योगशास्त्राभियुक्तो विरक्तः । कात्यायनोऽपि
" देशांतरस्थक्लीबैकवृषणानसहोदरान् । वैश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥
" जडमूकांधबधिरकुब्जवामनपोडकान्[1] । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
" धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुहकांस्तस्कराश्चापि परिविंदन्न दुष्यति " ॥
पोडको भग्नचरणद्वयः । अभार्यो मृतभार्यः । कामतोऽकारिणः स्वेच्छयैव नित्यविवाहमकुर्वाणाः । १५
अत्र ये सर्वात्मना विवाहानधिकारिणः क्लीबादयस्तेषु सत्सु कालविशेषमन्तरेणापि परिवेदने न दोषः । ये तु कालांतरेऽपि संभावितविवाहाधिकारा विरक्तवेश्यातिसक्तशूद्रतुल्य-कृषिसक्तराजपरतंत्रधनवृद्धिप्रसक्तकामतोकारिकुहकतस्करास्तेषुं[2] तत्स्वभावत्वावधारणे न दोषः । देशांतरस्थे विशेषमाह वसिष्ठः " अष्टौ दशद्वादशवर्षाणि ज्येष्ठं भ्रातरमनिविष्टम-प्रतीक्षमाणः प्रायश्चित्तीभवतीति । धर्मार्थमर्थार्थे विद्यार्थे वा देशांतरस्थे द्वादशवर्षं २० प्रतीक्षा कार्यांतरार्थे त्वष्टौ दश वेति " । तथा च स एव
"द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः । न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनःपुनरिति"॥
हेमाद्रिः । शूलपाणिस्तु " द्वादशवर्षाणि ब्राह्मणस्य विद्यासंबंधेनेति " गौतमवाक्ये ( १८।१७ ) ब्राह्मणग्रहणात्स एव द्वादशवर्षाणि प्रतीक्ष्यः क्षत्रियवैश्यशूद्रास्तु दशाष्टौ षडिति । तत्तुच्छं । अश्रुतषट्कल्पनायां प्रमाणाभावात् । धर्मार्थयोश्च क्षत्रियादावपि २५ संभवादिति । विवाहे तु ज्येष्ठानुज्ञायामपि दोषमाह हारीतः
" सोदराणां च सर्वेषां परिवेत्ता कथं भवेत् । दारैस्तु परिवेद्यंते नाग्निहोत्रेण नेज्ययेति "॥
अथ प्रायश्चित्तं । वसिष्ठः ( २०।८ ) " परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्निविशेत् " । अत्रापरार्के कनिष्ठेनोढा ज्येष्ठ उद्वहेत् अशास्त्रीयविवाहेन कनिष्ठनिरूपितभार्यात्वानुत्पत्तेर्ज्येष्ठोद्वाहयोग्यत्वात्कनिष्ठस्त्वन्यामुद्वहेदिति । तन्न । ३०

१ घ-दो; ई-घोडकान् । २ घ-षेषु । ३ घ-माना । ४ झ-कनिष्ठ भार्यात्वा ।

" ता चैवोपगच्छेदिति " विज्ञानेश्वरोक्तवाक्यशेषात् । भार्यात्वानुत्पत्तिस्तु कनिष्ठोद्वाहेऽपि साधिका । स्पष्टं च हारीतेन ज्येष्ठस्याब्दं व्रतमुक्त्वाऽन्योद्वाह एवोक्तः ।
"समासेऽब्दे तां कन्यां ज्येष्ठायोपपादयेयु.।सतामनुमान्यान्ययाविशेतैवं धर्मो न लुप्यत" इति।
तस्मात्परिवेत्ता कृच्छ्रातिकृच्छ्रोत्तरं स्वोढां ज्येष्ठाय ब्रह्मचार्याहृतभैक्षवद्गुरुपरिभवपरिहारार्थं
५ निवेद्य तेनानुज्ञाता तामेवोद्वहेदिति वासिष्ठार्थः । यत्तु सुमंतुः परिवेत्तादिपंचानां द्वादशरात्रं सक्तुप्राशनमुक्त्वा कनीयसं प्रत्याह "न भूयश्चैनामभिगच्छेदिति" तत्पुनर्विवाहाकामेऽदितव्यं ।
तत्रैवं व्यवस्था । सन्निधावकामतः कृच्छ्रातिकृच्छ्रौ । याज्ञवल्कीयं वक्ष्यमाणमुपपातकसामान्यव्रतचतुष्टयं च वर्णशक्त्याद्यपेक्षया योजनीयं । कामतः सन्निधौ कन्यापित्राद्यनुज्ञाया संवत्सरमिति । अत्रैव शंखः " परिविक्तिः परिवेत्ता च संवत्सरं द्वादशरात्रं भैक्षं
१० चरेयातामिति" । कामत पित्राद्यनुज्ञातोद्वाहे तु मानवं त्रैमासिकं। यत्तु विष्णुः(५४।१६)
"परिवित्तिः परिवेत्ता च यया च परिविद्यते । तद्दाता याजकश्चांद्रायण कुर्युरिति " ॥
तत्कृच्छ्रातिकृच्छ्रविषयं । यत्तु यमः
" कृच्छ्रौ द्वयोः परिवेद्ये कन्यायाः कृच्छ्र एव चाअतिकृच्छ्रं चरेद्दाता होता चांद्रायणं चरेदिति"॥
तदज्ञानत. क्षत्रियविषयं । द्वयो परिवेतृपरिवित्योः प्रत्येकं द्वौ कृच्छ्रौ । यत्तु सुमंतुः
१५ " परिवित्तिपरिवेतृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनब्राह्मणतर्पणं च । ता पुनर्भवमानस्तवे । न भूयश्चैनामभिगच्छेदिति " तच्छूद्रपरं । प्रसंगादुच्यते । देवलः
" ज्येष्ठायां यद्यनूढाया कन्यायामुह्यतेऽनुजा । या साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषू स्मृतेति" ॥
प्रायश्चित्तमाह वसिष्ठः ( २०।९–१० ) " अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चैवोपयच्छेद्दिधिषूपति ।कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्विशेतेति"।
२० " अग्रेदिधिषूपतिः प्राजापत्यं चरित्वा तामेव ज्येष्ठा पश्चादन्येनोढामुद्वहेत् । दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढा ज्येष्ठा कनीयस्याः पूर्वं विवोढे दत्वाऽन्यामुद्वहेदिति " मिताक्षरायां । कल्पतरौ च । स्यात्स्यातरमपि स्मृत्यर्थसारे । कनिष्ठापतिः द्वादशरात्रं कृत्वा तां स्वोढामेव ज्येष्ठोद्वाहे जाते उद्वहेत् । ज्येष्ठापतिस्तु कृच्छ्रातिकृच्छ्रे कृत्वा स्वोढा कनिष्ठापतये ब्रह्मचार्याहृतभैक्षवन्निवेद्य तदनुज्ञातां ज्येष्ठामेवोद्वहेदिति । अपरार्के तु अग्रेदिधिषूपति-
२५ स्थाने दिधिषूपतिरिति पठित्वा दिधिषूपतिरिति । तथा च प्रायश्चित्तविरहस्य इति । यत्तु गौतमः " परिवित्तिपरिवेतृपर्याहितपर्याधात्रग्रेदिधिषूपतिदिधिषूपतीनां सवत्सरं प्राकृतं ब्रह्मचर्य्यमिति " तत्परिवेतृसंवत्सरसमानविषयं । पर्याहितपर्याधात्रो स्वरूपमुक्तं संवर्त्तेन
"अनाहिताग्नौ ज्येष्ठे तु कनीयानादधीत चेत्.पर्याधाता कनिष्ठ स्याज्ज्येष्ठ.पर्याहित स्मृत"॥इति।
इति गुरुतल्पप्रसक्तानुप्रसक्तप्रायश्चित्तानि ।
३० अथ संसर्गप्रायश्चित्तं । तत्र संसर्गभेदानाह बृहस्पतिः

---

१ द्वा—स्फुटं वा ।

" एकशय्यासन पंक्तिर्भांडपक्वान्नमिश्रण । याजनाध्यापने योनिस्तथा च सहभोजनं ॥
"नवधा सङ्कर प्रोक्तो न कर्तव्योऽधमै सहेति" । योनि पातकिने कन्यादान । तत्कन्यापरिणयन वेति विज्ञानेश्वरकल्पतरुकारादय । पातकिस्त्रीगमनमित्यपरार्कशूलपाणी । योगापरित्यागाख्विदमेव युक्त । छागलेयः
" आलापाद्गात्रसस्पर्शान्निश्वासात्सहभोजनात् । सहशय्यासनाध्यानात्पाप सक्रमते नृणामिति"। ५
देवलः
" सलापस्पर्शनिश्वाससहयानासनाशनात् । याजनाध्यापनाद्यौनात्पाप सक्रमते नृणामिति " ॥
वसिष्ठः ( २०।४९ ) " पतितसप्रयोगे तु ब्राह्मेण वा यौनेन वा यास्तेभ्य सकाशान्मात्रा उपलब्धास्तासा परित्यागस्तैश्च न सविशेदिति " । मात्रा द्रव्य । एतेषा कर्मणा मध्ये केन कर्मणा कियता कालेन पातित्य तदाह विष्णुः ( ३५।३ ) " सवत्सरेण पतति तेन १०
सहाचरन्नेकयानभोजनासनशयनै । यौनस्रौवमुख्यैस्तु सबधै सद्य एवेति " । मुख्यो मुखभवोऽध्ययन च । एकामत्रभोजनेऽपि सद्य पातित्य
" याजन योनिसबध स्वाध्याय सहभोजन । कृत्वा सद्य पतत्येव पतितेन न सशय " ॥ इति देवलोक्तेः । यौनस्रौवमुख्यैरिति सत्यपि द्वद्वनिर्देशे प्रत्येकमेवैषा पातित्यहेतुत्व । य पतितै सह यौनमुख्यस्रौवाणामन्यतम सबध कुर्यात्तस्याप्येतदेव प्रायश्चित्तमिति सुमंतूक्तेः । १५
कल्पतरौ तु यश्चैतैर्यौनमौख्यस्रौवाणा सबधानामन्यतमेन सह सवत्सर सपर्कमियात्तस्याप्येतदेव प्रायश्चित्तमिति पाठ । तत्रात्यतापद्यज्ञानत पचमहायज्ञादियाजन । तथैवागाध्यापन । तथैव योनिसबधो व्यवहितो विवाहसबधो व्यवहितो विवाहसबधश्चेति ज्ञेय । एतेन
" सवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनादेकशय्यैकभोजनादिति "
हारीतीयं २०
" षाण्मासिके तु ससर्गे याजनाध्यापनादिभि । एकत्रासनशय्याभि प्रायश्चित्तार्द्धमाचरेत् ॥
" सवत्सरेण सस्पर्शे योनियुक्ते विशेषत । पूर्वोक्तेन विधानेन पतितव्रतमाचरेदिति " च बार्हस्पत्यं व्याख्यात । जिकेनस्तु समुच्चितानामेव याजनादीना सद्य पतनहेतुत्व प्रत्येकहेतुत्व तु सवत्सरससर्गे इति युक्तमूचे । परतु तद्बहुग्रथविरुद्ध । कौर्मे
" याजन योनिसबध तथैवाध्यापन द्विज । कृत्वा सद्य पतेज्ज्ञानात्सहभोजनमेव च ॥ २५
" अज्ञानादथ वा मोहात्कुर्यादध्यापन द्विज । सवत्सरेण पतति सहाध्यापनमेव चेति " ॥
द्वितीयवचनमगाद्यध्यापनपर । बौधायनः
" संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनात्सद्यो न शयनादिति " ॥
शयनात्स सद्यो न किंतु सवत्सरेणेति सबध । एतेन

१ घयरव-तया वसनभोजने । २ रयघल-द्रव्यं । ३ घवल-बृहद्विष्णु । ४ घलवयर-मुखाद्भवो, ई-मुख्याद्भवो ५ लयर-जिनस्तु घ-जिकस्त्री ।

" संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्योनात्त तु यानाशनासनादिति "
मानवमपि ( ११।१७९ ) व्याख्यातं । पैठीनसिस्तु न त्वेकशयनासनादित्यंतपादं
पपाठ । अत्र ज्ञानकृत एव संसर्गे पातित्यं नाज्ञानकृते
" संवत्सरं तु पतितैः संसर्गं कुरुते तु यः । यानशय्याशनैर्नित्यं जानन्वै पतितो भवेदिति" ॥

५ कौर्मोक्तिः
" पतितेन सहोषित्वा जानन्संवत्सरं द्विजः। मिश्रितस्तेन सोऽव्द्यांते स्वयं च पतितो भवेदिति "॥
देवलोक्तेश्च। अत्र संवत्सरमित्यत्यंतसंयोगवाचिद्वितीयाश्रुतेर्यथापष्ठ्यधिकशतत्रयदिनन्यापिन्येव
संसर्गे पातित्यं भवति न तु तन्न्यूनत्वे इति विज्ञानेश्वरादयः । अत एव
"संवत्सरेण पतति पतितेन सहाचरन्। भोजनाशनशय्यादि कुर्वाणः सार्वकालिकमिति"देवलीयं
१० सार्वकालिकपदमपि संगच्छते। ब्रह्महादिचतुष्टयसंसर्ग एव च महापातकं न तु संसर्गिसंसर्गेऽपि।
" ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः। एते महापातकिनो यश्च तैः सह संवसेदिति "॥
( प्रा. २२७ ) याज्ञवल्क्यीयादिषु तैरिति सर्वनाम्ना ब्रह्महादिचतुर्णामेव परामर्शात् ।
" संवत्सरेण पतति पतितेन सहाचरन् " इत्यादिषु पतितपदमपि ब्रह्महादिचतुःपरमेव ।
दोषस्तु संसर्गिसंसर्गेऽप्यस्त्येव । " एनस्विभिरनिर्णिक्तैर्नार्थं कंचित्समाचरेदिति "
१५ मनूक्तेः ( २१।१८९ )। अयं तु संसर्गस्त्रिविधः उत्तमो मध्यमः कनीयांश्च । तत्राद्य--
श्चतुर्द्धा। यौनस्रौवमौखैकपात्रभोजनभेदात् । मध्योऽप्येकयानासनशय्यैकपंक्तिभोजनभेदा-
च्चतुर्द्धा। अंत्यस्तु संलापस्पर्शनिःश्वासैकभांडपंक्तितदीयान्नभोजनतत्प्रतिग्रहतत्स्पृष्टान्नभोजनादि-
भेदादनेकविध इति निबंधकृतः। कश्चित्संसर्गदोषमपवदति वसिष्ठः ( १३।५१–५२ )
" पतितोत्पन्नः पतितो भवत्यन्यत्र स्त्रियाः । सा हि परगामिनी भवति । तामरिक्थामुप-
२० यच्छेतेति "। याज्ञवल्क्योपि (प्रा. २६१) " कन्यां समुद्वहेदेषां सोपवासामकिंचनामिति "।
सोपवासां कृतसंसर्गानुरूपप्रायश्चित्तामिति विज्ञानेश्वरः । तन्न । अकृतसंसर्गायाः प्राय-
श्चित्ताभावेन नित्यवच्छ्रवणविरोधात् । अतस्तस्या नित्यं पूर्वदिने उपवासोऽनेन विधीयते ।
अकिंचनां अगृहीतपितृवस्त्रादिकां । वृद्धहारीतः " पतितस्य कुमारीं विवस्त्रामहो-
रात्रोपोषितां प्रातः शुक्लेनाहतेन वाससाच्छादितां नाहमेतेषां न ममैत इति त्रिरुच्चैरभिदधानां
२५ तीर्थे स्वगृहे वोद्वहेदिति "। उद्वहेदित्यनेन स्वयमेव त्यक्तपतितसंसर्गामुद्वहेन्न पुनः
पतितात्प्रतिगृह्णीयादिति लभ्यते ।

पातक्युत्पन्नयोः स्त्रीपुमपत्ययोः प्रायश्चित्तमाह बौधायनः ( २।१।११ ) "अशुनि-
शुक्रोत्पन्नानां तेषां शुद्धिमिच्छतां प्रायत्यं पतनीयानां तृतीयोऽशः स्त्रीणामंशस्तृतीयमिति " ॥
प्रायत्यं प्रायश्चित्तं । पतनीयानां नरके पतंतीति पतनीयाः कर्तर्यनीयर् । कृत्यल्युटो
३० बहुलमिति स्मृतेः । कर्म प्रवचनीयवत् । तेन पतितोत्पन्नस्य पुत्रस्य तृतीयोऽशः ।

१ घ–मवरिक्था। २ ईघ–प्राजापत्यं।

कन्यायास्तु न तृतीयोंऽशो मौक्तिकनवमाश इति यावत् । यत्तु पराशरः ( १।२४–२५ )
" त्यजेद्देश कृतयुगे त्रेताया ग्राममुत्सृजेत् । द्वापरे कुलमेक तु कर्त्तार तु कलौ युगे ॥
" कृते संभाषणादेव त्रेताया स्पर्शनेन च । द्वापरे त्वन्नमादाय कलौ पतति कर्मणेति " ॥
तत्राद्यश्लोके कर्त्तार त्विति तुशब्देनैवकारार्थेन पूर्वप्रकृतियुगभेदेन व्यवस्थयोक्त देशग्रामकुलससर्गत्रयमेव वार्यते । न त्वप्रकृतो याजनादिससर्गोऽपीति । द्वितीयश्लोकेऽपि कृते सभाषणादेवेत्येवकारेणोत्तरवाक्यद्वये च तदनुषगेण कृते सभाषणमात्रात्पतति । त्रेताया स्पर्शमात्रात् द्वापरे तु तत्स्वामिकान्नप्रतिग्रहमात्रात्कलौ तु कृत्स्नेन निषिद्धकर्मणा याजनादिभिरित्यर्थ । अन्यथा पूर्ववाक्ये " कर्त्तार तु कलौ त्यजेत् " इत्यनेन साक्षाद्यत्नादे ससर्गो निषिद्ध । द्वितीयवाक्ये तु ' कलौ पतति कर्मणा ' इत्यनेन साक्षात्कर्तुरेव दोषो न ससर्गकर्त्तुरिति परस्परविरोध स्यात् । एव च माधवस्य कलौ ससर्गदोषाभावोक्तेरत्रैव तात्पर्य तथा च कलिनिषिद्धेषु ससर्गदोष इत्युक्तेर्दोषादिमात्रससर्ग कृतयुगादौ दोषजनकत्वे नोक्त पाराशरपूर्वश्लोके । यश्चोत्तरश्लोके कृतयुगादौ सभाषणमात्राद्दोष उक्तस्तद्विषया ।
अथ प्रायश्चित्तं । याज्ञवल्क्यः
" यो येन पतितेनैषा ससर्ग याति मानव । स तस्यैव व्रत कुर्यात्तत्ससर्गविशुद्धय" ॥ इति ।
पतितपद पापिमात्रोपलक्षक " ससर्गी येन ससर्ग कुर्यात्तद्व्रतमाचरेदिति " जाबालोक्तेः । मतिपूर्वेऽपि ससर्गे न मरणातिदेश किंतु द्वादशाब्दस्यैव । व्रतपदात् । अत्र च सत्यप्यतिदेशे पूर्णमेव द्वादशाब्द भवति । ' द्वादशभिर्वर्षैर्महापातकिन पूयते ' इति हारीतोक्तेः । न चेद ससर्गिभिन्नमहापातकिपर
" रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पग । व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विम " ॥ इति शंखवाक्येनोपसहारादिति वाच्य । महापातकसज्ञाया आनर्थक्यापत्ते । शंखवाक्य तु ससर्गिणोऽप्युपलक्षणार्थ । कामकृते ब्रह्मवधे तत्ससर्गेऽपि च कामकृते मरणतुल्यचतुर्विंशत्यब्द अकामतस्तु द्वादशाब्दमिति केचित् । विज्ञानेश्वरादयस्तु चतुर्विंशत्यब्दस्य मरण तुल्यत्वे मानाभावात्कामकृते वधे ससर्गे च द्वादशाब्दमेव । अकामकृते तु षडब्दमित्याहु । अकामत सद्य पतनहेतुससर्गे तु वसिष्ठः ( २०।४५–४६ ) " पतित सप्रयोगे तु ब्राह्मेण वा स्रौवेण वा यौनेन वा यास्तेभ्य सकाशा मात्रा उपलब्धास्तासा परित्यागस्तैश्च न सवसेदुदीचीं दिश गत्वाऽनश्नन् सहितामधीयान पूतो भवतीति " ।
पराशरः ( ४।८–१२ )
" ससर्गमाचरन्विप्र पतित दिप्वकामत । पचाह वा दशाह वा द्वादशाहमथापि वा ॥
" मासार्द्ध मासमेक वा मासत्रयमथापि वा । अब्दार्द्धमब्दमेक वा भवेदूर्ध्व तु तत्सम ॥

१ घ–त्व । २ घ–मासमेक तथा पक्ष ।

" त्रिरात्र प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्। चरेत्सातपन कृच्छ्र तृतीये पक्ष एव तु॥
" चतुर्थे दशरात्र स्यात्पराक पचमे तत । षष्ठे चान्द्रायण कुर्यात्सप्तमे त्वैंदवद्वय॥
" अष्टमे वा तथा पक्षे षण्मासान् कृच्छ्रमाचरेदिति "। ऊर्ध्वमित्यनेन वर्षद्वयव्यापी ससर्गो गृह्यते। अज्ञानत कृतस्य नाष्टशम्यैव पातित्यापादकत्वात्। एतानि प्रायश्चित्तान्यकामकृत

१ ससर्गविषयाणि। कामकृते तु मिताक्षरायां स्मृत्यंतरे

"पचाहे तु चरेत्कृच्छ्र दशाहे तप्तकृच्छ्रकं। पराकस्त्वर्द्धमासे तु मासे चान्द्रायण चरेदिति॥
" मासत्रये तु कुर्वीत कृच्छ्र चान्द्रायणोत्तर। षाण्मासिके तु ससर्गे कृच्छ्र त्वब्दार्धमाचरेत्॥
" ससर्गे त्वाब्दिके कुर्यादब्द चान्द्रायण तत " इति। आब्दिक इति किंचिन्न्यूने द्रष्टव्य। पूर्णे तु द्वादशाब्दविधानात्। उशनाः " कृतलक्षणैर्दर्शनस्पर्शनसभाषणादि वर्जयेत्।

१० दर्शने ज्योतिषा दर्शन हृदयालभन। सभाषणे ब्राह्मणसभाषण। पुनरपस्पर्शन चेति "। कृतलक्षणैश्च पदादिनाऽकितै पतितैरिति याक्न्। स्पर्शन च परपरया विवक्षित। साक्षात्पतित स्पर्शे स्नानविधानात्। यथा मनुः ( ५।८५ )

" दिवाकीर्तिमुदक्या च पतित सूतिका तथा। शव तत्स्पृष्टिन चैव स्पृष्ट्वा स्नानेन शुद्ध्यति"॥ सभाषण द्विचतुराद्यावृत्त। सकृत्सभाषणे पतिताना च सभाषे " दक्षिण श्रवण स्पृशेदिति "

१५ लघुप्रायश्चित्तश्रवणात्। बृहस्पतिः

" पतिताना गृह गत्वा भुक्त्वा च प्रतिगृह्य च। मासोपवास कुर्वीत चान्द्रायणमथापि वा "॥ अत्र चान्द्रायणमज्ञानाभ्यासे। मासोपवासस्तु ज्ञानाभ्यासे। भोजन तत्सहपंक्तिरिति केचित्। एकपात्रमित्यपरे। भोजने वर्षस्य पातित्यापादकत्वाद्गृहगमनप्रतिग्रहयोरपि वर्षमेव। इत्यमेव शूलपाणिः। शंखः " अमेध्यपतितचण्डालपुल्कसरजस्वलावधूतकुणिकुष्ठिकुनखिस्पृष्टान्नानि

२० भुक्त्वा कृच्छ्रमाचरेदिति "। इद च सकृदज्ञानत। ज्ञानतस्तु कृच्छ्रद्वय।

पतितस्वामिकान्नभोजने त्वाह प्रचेताः

" पतितान्न तु यो भुक्ते सततहस्तके वसेत्। पानीयपानतश्चैव नुपराणि विवेकान् "॥ इद च सकृज्ज्ञानविषय। पतितामान्नभक्षणे तत्सिद्धान्नभक्षणस्य चतुर्थो भाग। चाण्डालान्न भक्षणे तथा दर्शनात्। तथा च वसिष्ठः ( ९१।९७ ) " चाण्डालान्न तु भुक्त्वा त्रिरात्र

२५ मुपवसेत्सिद्धान्न भुक्त्वा पराक " इति। पतितोच्छिष्टभक्षणेऽगिराः

" चण्डालपतितादीनामुच्छिष्टस्य च भक्षणे। द्विज शुध्येत्पराकेण शूद्र कृच्छ्रेण शुद्ध्यतीति"॥ एतदपि सकृज्ज्ञानत एव। मार्कंडेयः

"अपाङ्क्तेयस्य य कश्चित्पंक्तौ भुक्ते द्विजोत्तम। अहोरात्रोषिता भूत्वा पचगव्येन शुद्ध्यतीति"॥ अत्र ब्रह्महादिचतुष्टयससर्गे पूर्णमेव व्रतमतिदिश्यते। इतरपतितससर्गे तु चतुर्थांशोन

" यो येन संपिबेद्वर्षं सोऽपि तत्तुल्यतामियात्। पादन्यून चरेत्सोऽपि तस्य तस्य व्रत द्विज "॥
इति व्यासोक्तेः। इतरपापेषु यो येन पापिना संसृज्यते स तदीयमेव प्रायश्चित्त पादोन कुर्यात्। तेनाद्य संसर्गी नवाब्द द्वितीय पादोन सप्ताब्दमित्यादि। यत्तु महापापविषये विज्ञानेश्वरः " द्वितीयसंसर्गी पादोन तृतीयोऽर्द्धं चतुर्थ पादमित्याह। यच्च शूलपाणिराद्यः पादोन द्वितीयोऽर्द्ध। तृतीय पाद। चतुर्थो न किंचिदिति ५
" एतदन्नाशिनो विप्रा कृच्छ्र तेषा विधीयते। तद्भोजिनोऽर्द्धकृच्छ्रेण तदन्नादास्तु पादत "
इति चाडालान्नसंकरे व्यासोक्तेः
" भुक्त यैस्तत्र पक्वान्न कृच्छ्र तेषा विधीयते। तेषामपि च यैर्भुक्तमर्द्ध तेषा विधीयते॥
" तेषामपि च यैर्भुक्त कृच्छ्रपादो विधीयते " इति। तत्रैवापस्तंबोक्तेश्च। तत्र एतयोर्वाक्ययो श्चाडालान्नसंसर्गविषयत्वेन साक्षात्पापिसंसर्गविषयत्वेन तत्र लिंगदर्शनता वाच्या। सा १० तु प्रत्यक्षव्यासवाक्येन बाध्यते। अथ निषिद्धस्पर्शे। याज्ञवल्क्यः
" चडालपुल्कसम्लेच्छभिल्लपारसिकादिकान्। महापातकिनश्चैव स्पृष्ट्वा स्नायात्सचैलकः "॥
षट्त्रिंशन्मते
' बौद्धान्पाशुपताश्चैव लोकायतिकनास्तिकान्। विकर्मस्थान् द्विजान् स्पृष्ट्वा सचेलो जलमाविशेत्"॥
मनुः ( ५।८४ ) १५
"उदक्या च दिवाकीर्तिं पतित सूतिका तथा। शव तत्स्पृष्टिन चैव स्पृष्ट्वा स्नान समाचरेत्"॥
दिवाकीर्तिश्चाडाल। एतदकामत। तथा च बृहस्पतिः
"दिवाकीर्त्तिं चितिं यूप पतित च रजस्वला। स्पृष्ट्वा प्रमादतो विप्र स्नान कृत्वा विशुद्ध्यति"॥
कामतोऽपि स एव
" पतित सूतिकामन्त्य शव स्पृष्ट्वा च कामत। स्नात्वा सचेल स्पृष्ट्वाऽग्निं घृत प्राश्य विशुद्ध्यति"॥ २०
होमो व्याहृतिभि। स्नाने विशेषमाह शातातपः
" चाडाल पतित व्यगमुन्मत्त शवमत्यन। सूपिका सूतिका नारी रजसा च परिप्लुता॥
" श्वकुक्कुटवराहांश्च ग्राम्यान्संस्पृश्य मानव। सचैल सशिर स्नात्वा तदानीमेव शुद्ध्यति"॥
छागलेयोऽपि
" चाडाल पतित स्पृष्ट्वा सचैलो जलमाविशेत्। शव तत्स्पृष्टिन चैव चैत्ययूप रजस्वला"॥ २५
अत्र श्वादिस्पर्शे यत्स्नानं तत्स्वशिरोदेशस्पर्शे। अन्यत्र त्वाचमन। तदाह शातातपः
" रजकश्चर्मकारश्च व्याधजालोपजीविनौ। निर्णेजकः सौचिकश्चटकः शैलूषकस्तथा॥
" मुखेभग तथा श्वा च वनिता सर्ववर्णगा। चक्री ध्वजी वध्यघाती ग्राम्यशूकरकुक्कुटौ॥
"एभिर्यदग संस्पृष्ट शिरोवर्ज द्विजातिषु। तोयेन क्षालन कृत्वा आचात शुचितामियात्"॥
कामत शिर स्पर्श तु वायुपुराणे ३०

१ ङ --चितिं यूप। २ घयर--श्वा। ३ घनयढई--गौचिड, ङ--शौ।

" उदक्या सूतिका चैव श्वानमत्यावसायिनं । नग्नादीन्मृतहारांश्च स्पृष्ट्वा स्नान विधीयते ॥
" स्नात्वा सचैलं मृद्भिश्च शुद्ध्येद्द्वादशभिर्नरः " । नग्नाः बौद्धादयः ।
तथा च विष्णुपुराणे
" सर्वेषामेव वर्णानां त्रयी संवरणं नृप । तां समुज्झति यो मोहात्स नग्नः पापकृन्नरः ॥

९ गार्ग्यः

" अन्त्यादवर्णरोष्टैश्च स्पर्शे व्यवहिते द्विज । अचेलं वा सचैलं वा स्नानं कृत्वा विशुद्ध्यति ॥
मतिपूर्वे सचैलमन्यदाऽचैलं । तथा
" शूद्रं स्पृष्ट्वा निषादं च शुद्ध्येदाचमनाद्द्विजः । तद्धीनस्पर्शनाद्यत्नात्प्राणायामैस्त्रिभिः द्विजः ॥
अनाचमन स्नानासमर्थस्य सच्छूद्रस्पर्शे वा । अत एवापरार्के स्मृत्यंतरं

१० " एडूक कुक्कुट काकश्वशूद्रात्यावसायिनः । दृष्ट्वेतानाचमेत्कर्म स्पृष्ट्वा तान् स्नानमाचरेत् ॥
कर्म इति कर्मकाल इत्यर्थः । वृद्धयाज्ञवल्क्यः
" चंडालपुक्कसम्लेच्छभल्लकापालिपारदान् । उपपातकिना चैव स्पृष्ट्वा स्नानं समाचरेत् " ॥

संवर्त्तः

" कैवर्तमृगयुव्याधशौनिशाकुनिकानपि । रजकं च तथा स्पृष्ट्वा स्नात्वैवाशनमाचरेत् ॥

११ यत्त्वापस्तंबः

" चर्मकारं च रजकं धीवरं नटमेव च । एतान्स्पृष्ट्वा द्विजो मोहादाचामेत्प्रयतोऽपि सन् ॥
"एतैः सस्पृष्टं उच्छिष्टं एकरात्रं पयः पिबेत् । तेरुच्छिष्टैस्त्रिरात्रं स्याद् घृतं प्राश्य विशुद्ध्यति ॥
तन्नाचमनशक्तस्य । अकामतो वा । शाट्यायनिः
"कापालिकानां सम्पर्के स्नानं कृत्वा विशुद्ध्यति । प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥

२० शातातपः

" यस्तु छाया श्वपाकस्य ब्राह्मणो ह्यधिगच्छति । तत्र स्नानं तु तस्यैव घृतप्राशो विशोधनं ॥
एतच्च चिरकालाधिष्ठानं इति भवदेवः । सर्वांगीने तु चंडालस्पर्शे प्रचेताः " स्वपाकेन
चंडालकायाभिस्पर्शने त्रिरात्रं शुद्धिरिति " । यत्त्वापस्तंबः " सर्वेषामत्यन्त्य
स्पर्शेनाचमनं विशुद्धिरिति " तदातुरस्य । मदिरास्पर्शे तु मनुः

२१ " नाभेरधः स्पर्शमात्रे स्नानमात्रं विधीयते । नाभेरूर्ध्वं त्रिरात्रं स्यान्मदिरास्पर्शने विधिः " ॥
यत्तु भवदेवीयं स्मृत्यंतरं
"मद्येन स्पृशते यस्तु ब्राह्मणं शंसितव्रतं । उपोष्य रजनीमेकां पं
तद् मनस्य जान्वधः स्पर्शे । मार्कण्डेयपुराणे
" अभोज्यसूतिकाषंढमार्जारास्वश्वकुक्कुटान् । "

१ यवनजयर्दर-प्रती ।

" सस्पृश्य शुद्धचति स्नानादुदक्याग्रामशूकरौ [1] । अभोज्या रजकादय । अपविद्धो लोकबहिष्कृत । मृतहारो मूल्येन शवहारक । तथांगिराः

" भासवायसमार्जारखरोष्ट्र च श्वशूकरान् । अमेध्यानि च सस्पृश्य सचैलो जलमाविशेदिति "॥

अत्र मार्जारो वनमार्जार । न तु ग्रहस्थ । तस्य शुचित्वात् । यथा सुमंतुः

"स्त्रीबालमशकमक्षिकामार्जारमूषिकाऽऽयासनशयनानुविप्रुषो नित्य मेध्या " । बृहस्पतिरपि ५

"स्त्रियो वृद्धाश्च बालाश्च न दुष्यति कथचन । मार्जारश्चैव दर्वी च मारुतश्च सदा शुचि "॥

मशकमक्षिकासाहचर्य्यान्मार्जारोऽत्र गृहस्थ एवेति शूलपाणिः । मिताक्षरायां तु मार्जारस्पर्शे स्नानमुच्छिष्टसमये अनुष्ठानसमये वेति । आपस्तंबः

"एक शाखा समारूढश्चाडालो वा रजस्वला । ब्राह्मणस्तत्र निवसन् सवासा जलमाविशेत् " ॥

शाखाग्रहणमेकावयव्युपलक्षणार्थं तेनैक पाषाणादेरपि ग्रहण । एतदकामत । कामतस्तु द्विगुण । १०

अभ्यासे तु स एव

" एकवृक्षसमारूढश्चाडालोऽथ रजस्वला । अहोरात्रोपितो भूत्वा पचगव्येन शुद्धचति " ॥

एतच्च स्नानानतर कार्यं । यमः

" चाडाले श्वपचे स्पृष्टे निशि स्नान विधीयते । न वसेत्तत्र यो रात्रौ सद्य स्नानेन शुद्धचति ॥

" अथ तत्र वसेद्रात्रावज्ञानादविचक्षण । तदा तस्य तु तत्पाप शतधा परिवर्तते " ॥ १५

पराशरः ( ७।२१ )

" अस्तगते यदा सूर्ये चंडाल पतित स्त्रिय । सूतिका स्पृशतश्चैव कथ शुद्धिर्विधीयते ॥

"जातवेद सुवर्णं च सोममार्गं तथैव च । ब्राह्मणानुगतश्चैव स्नान कृत्वा विशुद्धचतीति "॥

रात्रौ स्नाने विशेषमाह देवलः

"दिवाहृतैर्जलै स्नान निशि कुर्यान्निमित्तत । प्रक्षिप्य च सुवर्णं च सन्निधाप्य च पावक "॥ २०

शातातपः

"आदित्येऽस्तमिते रात्रावस्पृश्य स्पृशते यदि । भगवन्केन शुद्धि स्यात्तन्मे ब्रूहि सुनिश्चित ॥

" अनस्तमित आदित्ये सगृहीत तु यज्जल । तेन सर्वात्मना शुद्धि शवस्पृष्ट तु वर्जयेत् [2] "॥

पराशरः " स्नानमाचमन प्रोक्त दिवोद्धृतजलेन तु " । शिशोर्विशेषमाह वृद्धशातातपः

" शिशोरभ्युक्षण प्रोक्त बाल्स्याचमन स्मृत । रजस्वलादिसंस्पर्शे [3] स्नातव्य तु कुमारके "॥ २५

स एव

" प्राक्चूडाकरणाद्बाल प्राग्न्नप्राशनाच्छिशु । कुमारस्तु स विज्ञेयो यावन्मौजीनिबधनं "॥

शवस्य चंडालसंस्पर्शे षट्त्रिंशन्मते ' चडालशवसम्पर्शे कृच्छ्रं कुर्यात् । यानशय्यासने तु त्रिरात्र । जीवचडालेन सह पानीदिषु त्रिरात्र " । तथा " मणबधनाम्यनन

१ ह्र–महाग्र ग्रन्थेन । २ ह्र वात । ३ ह्र–संस्पर्शे । ४ ई–चडालेन सह पानादिषु अन्यानि हस्तरत्ने ।

रुधिरोत्पादनेषु कृच्छ्रं द्वादशरात्रं चरेत् " । व्रणनंधनादीनां चंडालं प्रतिकरणे । चंडालेन वाऽश्मनि तत्करणे । आपस्तम्बः

"येनकेनचिदभ्यक्तश्चंडालं पतितं स्पृशेत् । उपवासेन चैकेन पंचगव्येन शुद्ध्यति " ॥

एतच्चाभ्यासे । अनभ्यासे त्वपरार्के प्रचेताः

५ "चंडालो यदि कायस्य रक्तमुत्पादयेत्कचित् । त्रिरात्रेण विशुद्धिः स्यादेकह्रासेन चोत्तरे "॥ उत्तरे क्षत्रियादौ त्रिरात्रादेकैकस्य ह्रासः । क्रतुः " चंडालस्योच्छिष्टपाने चंडालान्नतुदर्शने गीतवादित्रश्रवणभैषज्यक्रियायां च द्विरात्राभोजनेन शुद्धिः । अशुचिं दृष्ट्वाऽऽदित्यमीक्षते । प्राणायामं कृत्वा पंचदशमात्रकं " । सुमंतुः " चंडालदर्शने सूर्यदर्शनं । भाषणे ब्रह्माभिव्याहारः । स्पर्शने सचैलं स्नानमिति " । ब्रह्म गायत्री । क्वचिदशुचिदर्शनेऽपि

१० गायत्रीजपः । तथा च शंखलिखितौ " अशुचिदर्शने गायत्रीमेव जपेदिति " । गौतमः ( ९।१७–१९ ) " न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत । संभाष्य पुण्यकृतो मनसा ध्यायेद्ब्राह्मणेन वा सह संभाषेत " । तल्पात्वधनलाभवधे पृथग्वर्षाणीति " ( २२।१८ ) । तल्पं भार्या । वधो विघ्नः । पृथक् प्रत्येकं । वृद्धपराशरः " दारात्वधनलाभानां वुध्वा विघ्नं समाचरेत् । प्रत्येकं प्राकृतं कुर्याद्ब्रह्मचर्यं तु वार्षिकमिति "॥

१५ मनुः ( ५।८९ )

" आचम्य प्रयतो नित्यं जपेदशुचिदर्शने । सौरान्मंत्रान्यथोत्साहं पावमानीश्च शक्तितः "॥

देवलः

" चंडालधर्मसंयोगे प्राजापत्यं समाचरेत् । चरेत्त्रिरात्रं चंडालकूपतीर्थनिषेवणात् " ॥

धर्मसंयोग उपदेशः । पराशरः

२० "चंडालैः सह सुप्त्वा तु त्रिरात्रमुपवसेत् । चंडालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः " ॥ एतच्चाल्पकालसाध्ये अन्यत्र प्रायश्चित्ताधिक्यस्य वक्ष्यमाणत्वात् । अपरार्के वसिष्ठः

" चाण्डालेन तु संस्पृष्टं कांस्यभांडं समृन्मयं । अज्ञानात्कांस्यभोजी तु मृन्मये जलपानकृत् ॥

" कांस्यं भुक्त्वा चरेत्कृच्छ्रं जलपाने तु कृच्छ्रकं " । कृच्छ्रकः पादकृच्छ्रः ।

अथ चांडालसंकरे । पराशरः "अविज्ञातस्तु चांडालो यत्र वेश्मनि तिष्ठति " इत्युपक्रम्य

२५ " दध्ना सर्पिः पयोभ्यां च युक्तं गोमूत्रयावकं । भुंजीत सह भृत्यैश्च त्रिसंध्यमवगाहनं ॥

" त्र्यहं भुंजीत दध्ना च सर्पिषा त्र्यहमेव च । त्र्यहं क्षीरेण भुंजीत एकैकेन दिनत्रयं ॥

" भावदुष्टं न भुंजीत नोच्छिष्टं कृमिदूषितं । त्रिपलं क्षीरदध्नोश्च पलमेकं तु सर्पिषः ॥

" अङ्गारेषु भवेच्छुद्धिरारकूटे सकांस्यके । जलशौचेन वस्त्राणां परित्यागस्तु मृन्मये ॥

" कुसुंभगुडकार्पासं लवणं तैलसर्पिषी । द्वारे कृत्वा च धान्यानि दद्याद्वेश्मनि पावकं ॥

" एव शुद्धस्तत पश्चात्कुर्याद्ब्राह्मणतर्पण । त्रिंशत गोवृष चैक दद्याद्विप्रेषु दक्षिणा ॥
" पुनर्लेपनखातेन होमजप्येन शुद्धयति। आधारेण च विप्राणा भूमिदोषो न विद्यत" ॥ इति ।
स्वल्पकालसपर्क एतत् । यत्तु संवर्तः
" अत्यज पतितो वाऽपि निगूढो यत्र तिष्ठति । सम्यग्ज्ञात्वा तु कालेन तत कुर्याद्विशोधन ॥
" चाद्रायण पराको वा द्विजातीना विशोधन । प्राजापत्य तु शूद्राणा शेषाणामिदमुच्यते ॥ ५
" यैस्तत्र भुक्त पकान्न तेषामुक्तो विधिक्रम " । शेषाणा प्राजापत्य इत्यर्थ ।
" तेषामपि तु यैर्भुक्त कृच्छ्रपादो विधीयते ।
" कूपैकपानदुष्टा ये तथा ससर्गदूषिता । सर्वानेवोपवासेन पचगव्येन शोधयेत् ॥
" बालापत्या तथा रोगी गर्भिणी वृद्ध एव वा । तेषा नक्त प्रदातव्य बालाना प्रहरद्वय " ॥
बहुकालाभ्यास एतत् । अत्र विशोधनप्रकार प्रायश्चित्तातर चाह च्यवनः " चडालसकरे १०
भवनदहन । सर्वमृद्भाडभेदन । दारवाणा तु तक्षण । शखशुक्तिसुवर्णरजतचैलानामद्भि
प्रक्षालन । कास्यताम्राणामाकरे शुद्धि । सौवीरदधितक्राणा परित्याग । शेषरसद्रव्यरक्षण
गोमूत्रयावकाहारो मास भक्षयेत्। बाल्वृद्धस्त्रीणामर्द्धप्रायश्चित्त । आषोडशाद्वाला । सप्तत्यूर्ध्व
वृद्धा । चीर्णे प्रायश्चित्ते ब्राह्मणभोजन । गोशत दद्यादभावे सर्वस्वमिति " ।
एतदतिचिरकालसकरे पराशरः १५
" चडाले सह सपर्के मास मासार्द्धमेव वा । गोमूत्रयावकाहारो मासार्द्धेन विशुद्धयतीति " ॥
कृत्वेति शेष । मासार्द्धेन । मासश्चार्द्ध च मासार्द्ध । माससपर्के मासेन । तदर्द्धसपर्के
त्वर्द्धेन । चाडालशब्देन तत्समा पुल्कसादयोऽप्युपलक्ष्यते । अत एव सवर्तः
"चाडाले सकरे विप्र श्वपाके पुल्कसैरपि । गोमूत्रयावकाहारो मासार्द्धेन विशुद्धयति " ॥
मासादधिकर्किचित्कालसकरे तु हारीतः २०
"चाडाले सह सयोगे प्राजापत्येन शुद्धयति । विप्रान्दशावरान्कृत्वा तैरनुज्ञाप्य शासनात् ॥
" आकठस्य प्रमाण तु कुर्याद्गोमयकर्द्दम । तत्र स्थित्वा त्वहोरात्र वायुभक्ष समाहित ॥
"बालकृच्छ्र तत कुर्याद्गोष्ठे वसति सर्वथा । सकेश वपन कुर्यात्परमा शुद्धिमृच्छतीति" ॥
बालकृच्छ्रलक्षणमुक्त । यत्तु हारीतः
" चडालश्वपचाना च सकरे समुपस्थिते । अहोरात्र द्विरात्र वा त्रिरात्र षडह स्मृत ॥ २५
" अविज्ञातश्चडालः सप्ताह निवसेद्यदि । तस्य ज्ञात्वोपपन्नस्य विप्रा कुर्युरनुग्रह ॥
" दधिक्षीरघृतैर्युक्त कृच्छ्र गोमूत्रयावक । प्राशयेत्सह भृत्यैस्तु मासमेक निरतरमिति " ॥
तदहोरात्राद्यतिसकरे । पराशरः ( ६।४१ )
"रजकी चर्मकारी च लुब्धकी वेणुजीविनी । चातुर्वर्ण्यस्य गेहे तु अज्ञानाद्यदि तिष्ठति ॥

१ यह-न्क । २ घ-प्रष्ठ । ३ ररघ-वती, ह विनि । ४ ह-ताराधि ईन-नाद्यपि ।

"ज्ञात्वा तु निष्कृतिं कुर्यात्पूर्वोक्तस्यार्द्धमेव तु। गृहदाहं न कुर्वीत शेषं सर्वं च कारयेदिति"॥
अत्र यादृशचांडालसंसर्गे यत् रजकादि तादृशसंसर्गे तदर्द्धं। रजक्यादिषु लिंगमविवक्षितं।
बृहस्पतिः

"अकामतश्चापदि वा यदा जायेत संकरः। तदा कार्य्यस्तिलैर्होमो गायत्र्या जपनं तथा॥
५ "स्नात्वाऽघमर्षणं कुर्यात्प्राणायामाश्च संकरे। गायत्रीसूक्तजपनं तिलैर्होमं च शक्तितः॥
"अकामतः कृते स्वल्पे शुद्धिरेषा प्रचोदितेति"॥ अथोच्छिष्टादिस्पर्शे आपस्तंबः
"येनकेनचिदुच्छिष्टः संस्पर्शी यः परैः सह। यच्छेत्सद्यः समप्लुत्य प्रायश्चित्तेन युज्यते"॥इति।
"चंडालैः श्वपचैः स्पृष्टो विण्मूत्रे कुरुते द्विजः। त्रिरात्रं तत्र कुर्वीत भुक्त्वोच्छिष्टः षडाचरेत्"॥
अत्र षडुपवासे प्राजापत्यतुल्यता। अत्रानुच्छिष्टस्य यत्स्पर्शे स्नानं तस्योर्ध्वोच्छिष्टस्य
१० कामतस्तत्स्पर्शे षडुपवासतुल्यः प्राजापत्यः। तथा च हारीतः
"अनुच्छिष्टस्य संस्पर्शे स्नानं येन विधीयते। उच्छिष्टस्तेन संस्पृष्टः प्राजापत्यं समाचरेदिति"॥
तथा च सुमंतुः

"चंडालं पतितं दृष्ट्वा तथा नारीं रजस्वलां। उच्छिष्टं तु द्विजः स्पृष्टः प्राजापत्येन शुद्ध्यति"॥
एतत्कामतः। यत्तु आपस्तंबः
१५ "भुक्त्वोच्छिष्टोऽन्त्यजैःस्पृष्टः प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे स्मृतः पादः पाद आमाशने तथेति"॥
तत्र अर्द्धोच्छिष्ट इति मुखे ग्रासप्रक्षेपमात्रं कृतं न तु निगीर्णः। अकामतः स एव
"भुक्त्वोच्छिष्टस्त्वनाचांतश्चांडालैः श्वपचेन वा। प्रमादात्स्पर्शनं गच्छेत् तत्र कुर्याद्विशोधनं॥
"गायत्र्यष्टसहस्रं तु द्रुपदानां शतं तथा। त्रिरात्रोपोषितो भूत्वा पंचगव्येन शुद्ध्यतीति"॥
यत्तु स एव
२० "चंडालेन तु संस्पृष्टो विशौचस्तु द्विजोत्तमः। उपोष्य रजनीमेकां पंचगव्येन शुद्ध्यतीति"॥
तदप्यकामतः। काश्यपः

"श्वशूद्रांत्यचांडालमद्यभांडरजस्वलाः। यद्युच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सांतपनं भवेत्"॥
एतत्कामतोऽभ्यासे। मद्यं सुरा। *अन्यत्राल्पप्रायश्चित्तस्योक्तत्वात्।*
तथा च वृद्धशातातपः
२१ "उच्छिष्टः संस्पृशेद्विप्रो मद्यं शूद्रं शुनोऽशुचीन्। अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति"॥
यत्तूच्छिष्टादेः श्वादिस्पर्शे संवर्तः
"कृतमूत्रपुरीषो वा भुक्तोच्छिष्टोऽथवा द्विजः। श्वादिस्पर्शे जपेद्देव्याः सहस्रस्नानपूर्वकमिति"॥
तदकामतः। यत्त्वपरार्के आपस्तंबः

" उदक्या स्पृष्ट उच्छिष्टो विड्वराहैश्च कुक्कुटैः । काकमार्जारकव्यादभिरपवासेन शुद्धयतीति "
तदापद्यकामत । यत्तु व्याघ्रः
' चण्डालोदकमस्पृष्ट स्नान कृत्वा विशुद्धयति । उच्छिष्टस्तेन संस्पृष्टस्त्रिरात्रेण विशुद्धयतीति "॥
तदप्यकामत एव । यत्तु दक्षः
" पाने मैथुनसंसर्गे तथा मूत्रपुरीषयोः । सम्पर्श यदि गच्छेत्तु शवोदक्यान्त्यजैः सह ॥ ५
" दिनमेकं चरेन्मूत्रे पुरीषे तु दिनद्वये । दिनत्रय मैथुने स्यात्पाने तु स्याच्चतुष्टयमिति " ॥
तत्कामत । संवर्तः
" चर्मार रजकं वेण धीवर नटमेव च । एतै स्पृष्टस्तथोच्छिष्ट एकरात्रं पय पिबेत् ॥
" तैरुच्छिष्टैस्त्रिरात्र स्याद् घृत प्राश्य विशुद्धयतीति " । अधोच्छिष्टविषय चेद । ऊर्ध्वो
च्छिष्टे तु त्रिरात्र । तथा च लघुहारीतः १०
" उच्छिष्ट सस्पृशेचस्तु नटरजस्मोचकान् । अधोच्छिष्टो यदा स स्यादेकरात्रमभोजन ॥
"ऊर्ध्वोच्छिष्टो यदा स स्यात्प्रायश्चित्त भवेदिदा । उपवासस्त्रिरात्र स्याद्घृत प्राश्य विशुद्धयतीति "॥
अतश्च । ऊर्ध्वोच्छिष्टस्य तैरुच्छिष्टै स्पर्शे षड्रात्र । एवमेव यत्रोच्छिष्टस्य चाण्डालादिस्पर्शे
षड्रात्र तथाधोच्छिष्टस्य तदर्द्ध त्रिरात्र । अत एव शातातपः
" उच्छिष्टस्तु स्पृशेद्विप्रश्चण्डाल तु कथचन । ऊर्ध्वोच्छिष्टस्तु सम्पृश्य द्विज सातपन चरेत्॥ १५
" अधोच्छिष्टस्त्रिरात्रेते पञ्चगव्येन शुद्धयतीति " । सातपनमिह सप्ताहसाध्य । यत्तु
चाण्डालादीनुपक्रम्य वृद्धशातातपः
" अशुद्धान्स्वयमप्येतानशुद्धश्च यदा स्पृशेत् । विशुद्धयत्युपवासेन त्रिरात्रेण तत शुचि "॥
तथा एतानेव प्रकृत्याह देवलः
" अशुद्धान्स्वयमप्येतानशुद्धो यदि सस्पृशेत् । विशुध्यत्युपवासेन पुन कृच्छ्रेण वा पुनरिति"॥ २०
तत्राशुद्धानिति स्वरूपकीर्तन । मूत्रादिकरणेन वा स्वयमशुद्ध इत्यधोच्छिष्ट दिना । एक-
रात्रमाप्यज्ञानत । त्रिरात्र ज्ञानत । कृच्छ्रस्त्वभ्यासे । मिताक्षरायां तु कृच्छ्र श्वपाकादि-
विषय । श्वादिषु तूपवास इति । यत्तु शातातपः
"अत्यन्ते हस्तकाष्ठेन वाससा स्पृष्ट एव वा । प्रक्षाल्याग तदा वामे उच्छिष्टस्तु निशा क्षिपेदिति"॥
तदशुद्ध एव विषये । उच्छिष्टस्य पुरोपस्पर्शे लघुहारीतः २५
" श्वविष्ठा काकविष्ठा वा कङ्कगृध्रनरस्य च । अधोच्छिष्टस्तु सम्पृष्ट मनेग्रे त्र्यमाविरोन् ॥
" ऊर्ध्वोच्छिष्टस्तु सम्पृश्य प्रायश्चित्तमिद चरेत् । उपोष्य रजनीमेका पञ्चगव्येन शुद्धयति"॥
उच्छिष्टस्य चाण्डालसम्पर्शे विशेषमाह हारीतः
" उच्छिष्टस्तु स्पृशेद्विप्रश्चाण्डालान् कथचन । ऊर्ध्वोच्छिष्टस्तु संस्पृष्टो द्विजश्चान्द्रायण चरेत् ॥

१ शयन—पाने ।

"अथोच्छिष्टो यदा स स्यात्प्रायश्चित्तं भवेदिदं। निरान्नमुपवास स्यात्पञ्चगव्येन शुद्ध्यतीति"॥
पराशरः ( ७।२१ )
" उच्छिष्टोच्छिष्टसस्पृष्ट शुना शूद्रेण वा पुन । उपोष्य रजनीमेका पञ्चगव्येन शुद्ध्यति"॥
उच्छिष्टश्चासावुच्छिष्टसस्पृष्टश्चेति विग्रह । सवर्णविषयमेतत् । अत्रिः
५ " उच्छिष्टोच्छिष्टसस्पृष्टो ब्राह्मणो ब्राह्मणेन तु । दशाख्य जपेत्पश्चाद्गायत्र्या शोधन भवेत्" ॥
ब्रह्मपुराणे
"उच्छिष्टेन तु विप्रेण द्विज स्पृष्टस्तु तादृश । उभौ स्नान प्रकुर्वीत सद्य एव समाहिताविति"॥
उच्छिष्ट विप्र प्रकृत्याह पराशरः ( ७।२२ )
" अनुच्छिष्टेन शूद्रेण स्पर्शे स्नानं विधीयते। तेनोच्छिष्टेन सस्पृष्ट प्राजापत्य समाचरेदिति"॥
१० यत्तु ब्राह्मे
" उच्छिष्टेनाथ शूद्रेण विप्र स्पृष्टस्तु तादृश । उपवासेन शुद्ध स्याच्छुना सस्पृष्ट एव चेति"॥
तदापद्यशक्तस्य । देवलोऽपि
' उच्छिष्ट मानव स्पृष्ट्वा भोज्य चाऽपि समाहित । तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यतीति"॥
द्रव्यहस्तस्योच्छिष्टस्पर्शे मनुः ( ५।१४२ )
१५ ' उच्छिष्टेन तु सस्पृष्टो द्रव्यहस्त कथचन । अनिधायैव तद्द्रव्यमाचान्त शुचितामियात्"॥
एतच्च पेयविषय । भोज्यविषये तु वसिष्ठः
" प्रचरन्नन्नपानेषु यद्युच्छिष्टमुपस्पृशेत् । भूमौ निधाय तद्द्रव्यमाचान्त प्रचरेत्तत "॥द्रव्यस्य
त्वभ्युक्षण कार्यमित्याहतु शंखलिखितौ " द्रव्यहस्त उच्छिष्टो निधायाभ्युक्षयेद्द्रव्यमिति" ।
उच्छिष्ट उच्छिष्टस्पृष्ट । एतच्चानुच्छिष्टहस्तादिना स्पर्शे । साक्षादुच्छिष्टहस्तादिस्पर्शे
२० त्वभोज्यमेव । यथाह वसिष्ठः ( १४।२०—२१ ) " उच्छिष्टमगुरोरभोज्य स्वमुच्छिष्ट-
मुच्छिष्टोपहत चेति " । उच्छिष्टस्य तैलाभ्यक्तस्य च मूत्रादिकरणे आपस्तंब
" तैलाभ्यक्तस्त्वनाचान्त श्मश्रुकर्मणि मैथुने । मूत्रोच्चार यदा कुर्यादहोरात्रेण शुद्ध्यति "॥
उच्छिष्टस्य सूर्यादिदर्शने दोष उक्तो मार्कंडेयपुराणे
" सूर्येंदुतारका दृष्टा यैरुच्छिष्टै कदाचन । तेषा याम्यैर्नैरैराक्षिप्यस्तो वह्नि समिद्ध्यते"॥
२५ अत्र च स्नातकव्रतलोपे च ' प्रायश्चित्तमभोजनमिति " मनूक्तं द्रष्टव्यम् । तस्यैव चाण्डालादि-
दर्शने बौधायनः " चाण्डालादिदर्शने ज्योतिषा दर्शन । सभाषणे ब्राह्मणसभाषणं ।
उच्छिष्टदर्शने त्वेकरात्रमुपवास । संभाषणे द्विरात्र । सहगमने सचैल स्नानमिति " ।
चाडालदर्शन इत्यनुच्छिष्टस्य उच्छिष्टदर्शने इति उच्छिष्टस्य चाडालदर्शने इत्यर्थ ।
एवमग्रेऽपि । उच्छिष्टस्य पलाड्वादिस्पर्शे बृहस्पतिः
३० " सुरापलाडुलशुनस्पर्शे वामकृते द्विज । त्र्यह पिबेत्कुशाम्भ सावित्रीं च जपेत्तथा " ॥
इदमूर्ध्वोच्छिष्टस्येति शूलपाणिः । यत्तु स एव

"पलाण्डुलशुनस्पर्शे स्नात्वा नक्तं समाचरेत् । कृतोचारस्त्वहोरात्रं उच्छिष्टो ऽथहमाचरेदिति"॥ तदधोच्छिष्टविषयं वा ।

**अथानुच्छिष्टस्य नीलीवस्त्रपरिधाने । भविष्यत्पुराणे**

" शृणुष्वेति महाबाहो नीलीवस्त्रस्य धारणात् । वाससो गणशार्दूल गदतो मम कृत्स्नशः ॥
" पालनाद्विक्रयाच्चैव तद्वृत्तेरुपजीवनात् । पतितस्तु भवेद्विप्रस्त्रिभिर्वर्षैर्विशुद्ध्यति ॥ ५
" नीलीरक्तेन वस्त्रेण यत्कर्म कुरुते द्विजः । स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणं ।
" *वृथा तस्य महायज्ञो नीलीवस्त्रस्य धारणात् ।*
" नीलीरक्तं यदा वस्त्रं कश्चिद्विप्रस्तु धारयेत् । अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥
" रोमकूपे यदा गच्छेद्रसो नील्यादिकः क्वचित् । त्रिवर्षेषु च सामान्यं तसकृच्छ्रं विशोधनं॥
" नीली दारु यदा भिंद्याद्ब्राह्मणस्य शरीरतः । शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत्"॥ १०

इदमज्ञाने । ज्ञाने तु द्विगुणं । अत्रापवादः । नीलीत्यनुवृत्तावापस्तंबः " स्त्रीणां क्रीडार्थं संयोगे शयनीयेन दुष्यतीति " । एवमेव केशनिर्मितवस्त्रधारणे चोपवासः । " पंचगव्यं घृतं हिरण्योदकं चाथिवमिति " स्मृत्यर्थसारे ।

**अथ रुद्रनिर्माल्यस्पर्शे । कालिकापुराणे** ' स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः "।

**अथ रजस्वलायाअस्पृश्यस्पर्शे ।** तत्र रजस्वलयोः सपत्न्योरेकगोत्रयोः स्पर्शे वसिष्ठः १५
"स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रे त्वेकभर्तृके । कामादकामतो वाऽपि सद्यः स्नानेन शुद्ध्यतः " ॥
असपत्न्योस्तु सवर्णयोः स्पर्शे मार्कंडेयः[१]
" उदक्या तु सवर्णाया स्पृष्टा चेत्स्यादुदक्यया । तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयः" ॥
इदं चाकामतः । कामतस्तु काश्यपः
" रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि । एकरात्रं निराहारा पंचगव्येन शुद्ध्यति" ॥ २०

यत्तु पराशरः ( ७।१२।१७ )
"स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी ब्राह्मणीं तथा । तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यतीति"॥
तत्कामतोऽभ्यासे । सहशयनादिचिरस्पर्शे वा । असवर्णास्पर्शे पुनः स एव
" रजस्वला तु संस्पृष्टा राजन्या ब्राह्मणी च या । त्रिरात्रेणैव शुद्धिः स्याद्व्यासस्य वचनं यथा ॥ २५
" रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी च या । पंचरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥
" रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी च या । षड्रात्रेण विशुद्धिः स्याद्ब्राह्मण्या कामकारतः ॥
"अज्ञानतश्चरेदर्द्धं ब्राह्मणी सर्वजातिषु" । अत्र यथा ब्राह्मणीरजस्वलयोः स्पर्शे उपवासः पंचगव्याशनं । तथाऽन्यासामपि सवर्णरजस्वलास्पर्शे तदेव । यथा ब्राह्मण्याः क्षत्रियास्पर्शे त्रिरात्रं तथा क्षत्रियाया वैश्याया शूद्रास्पर्शेऽपि तदेव च । मदनदेवनिबंधे स्मृतिः ३०

---

१ ख-मार्कंडेय ।

" रजस्वला तु या नारी अन्योन्यमुपसंस्पृशेत्। सवर्णे पंचगव्येन त्रिरात्रमसवर्णके " ॥ पंचगव्येन उपवाससहितेनेति भवदेवः। तथा शातातपः

" रजस्वले उभे नार्य्यावन्योन्यं स्पृशतो यदि। सवर्णे पंचगव्येन ब्रह्मकूर्चमतः परमिति "॥ यत्तु वृद्धवसिष्ठः

५ ' स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजाऽपि वा। कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुद्ध्यति॥
"स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा। कृच्छ्रार्द्धाच्छुद्ध्यते पूर्वा उत्तरा तु तदर्द्धतः॥
"स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपि वा। उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा॥
"स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्रा तथैव च। त्रिरात्राच्छुद्ध्यते पूर्वा उत्तरा तु दिनद्वयात्॥
' वर्णानां कामतः स्पर्शे शुद्धिरेषा पुरातनीति" ॥ एतच्च कामतोऽभ्यासे। दानेन पादकृच्छ्र-
१० प्रत्याम्नायेन। पतितचांडालादिस्पर्शे वृद्धवसिष्ठबृहस्पती

" पतितांत्यश्वपाकेन संस्पृष्टा चेद्रजस्वला। तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्॥
" प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये ह्यहमेव तु। अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमेव च॥
" शूद्रयोच्छिष्टया स्पृष्टा शुना च ह्यहमाचरेत् " ॥ तान्यवशिष्टानि दिनानि व्यतिक्रम्य अनाशकेन नीत्वेत्यर्थः। अत्र सर्वत्र पंचगव्यप्राशनमपि कर्त्तव्यमिति भवदेवः। यत्तु
१५ बौधायनः

" रजस्वला तु संस्पृष्टा चांडालांत्यश्वबायसैः। तावत्तिष्ठेन्निराहारा यावत्कालेन शुद्ध्यतीति" ॥ एतदशक्तायाः। अकामे वा। यत्तु वृद्धशातातपः

"उदक्या सूतिका वाऽपि शवांत्यं संस्पृशेद्यदि। त्रिरात्रेणैव शुद्ध्येत इति शातातपोऽब्रवीत्"॥ तथा
" चंडालैः श्वपचैर्वाऽपि आत्रेयी स्पृश्यते यदि। त्रिरात्रोपोषिता भूत्वा पंचगव्येन शुद्ध्यति " ॥
२० काश्यपः

"चांडालेन तु संस्पृष्टा कदाचित्स्त्री रजस्वला। तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्॥
"त्रिरात्रमुपवासः स्यात्पंचगव्येन शोधनं। ता निशास्तु व्यतिक्रम्य अनाघ्रातं तु कारयेदिति"॥ तदेतत्प्रथमदिनविषयं। शूलपाणिस्तु काश्यपवाक्ये प्रथमादिदिनव्यवस्था नास्ति। त्रिरात्रेणैवेति वृद्धशातातपवाक्यात्। तथा च कामविषयमित्याह। तन्न। बार्हस्पत्येन प्रथमदिन एव
२१ त्रिरात्रस्य व्यवस्थितत्वात्तद्विषयत्वमेव च न्याय्यमिति। उपवासासमर्थायां त्वंगिराः

" चंडालः श्वपचो वाऽपि यद्यात्रेयीं स्पृशेद्यदि। अग्निकृच्छ्रैर्वर्त्तेत पंचगव्येन शुद्ध्यति " ॥ पंचगव्यपानं तु स्नानानंतरं कार्यं। चांडालेन सहैकवृक्षाद्यारोहणे पराशरः

" एकवृक्षसमारूढश्चांडालेऽथ रजस्वला। अहोरात्रोषितो भूत्वा पंचगव्येन शुद्ध्यति " ॥ श्वादिस्पर्शे विशेषमाह यमः

---

१ हे-देवल०।

" रजस्वला तु सस्पृष्टा शुना जम्बुकवायसैः । निराहारा भवेत्तावद्यावत्कालेन शुद्ध्यति " ॥
एतदकामतः । कामतस्तु रजस्वलानुवृत्तौ बृहस्पतिः
"शुना चोच्छिष्टया शूद्रा सस्पृष्टा त्र्यहमाचरेत् । अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेदिति"॥
प्रथमद्वितीयदिने श्वादिस्पर्शे त्र्यहं परतश्चतुर्थे । अत्रापि तान्यहानि व्यतिक्रम्येति योज्यं ।
यत्तु बौधायनः ५
"रजस्वला तु सस्पृष्टा ग्राम्यकुक्कुटसूकरैः । श्वभिः स्नात्वा पिबेत्तावद्यावच्चन्द्रस्य दर्शनमिति"॥
चन्द्रदर्शनं नक्तमित्यर्थः । एतदशक्तायाः चतुर्थदिनविषयं वा । रजकादिस्पर्शे तु श्वस्पर्शसमानमेव ।
तयोः समानत्वादिति शूलपाणिः । यत्तु प्रचेताः
' रजस्वला तु भुञ्जाना श्वान्त्यजादिं स्पृशेद्यदि । पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यतीति "॥
तत्कामतोऽभ्यासे । भोजनकाले श्वान्त्यजादिस्पर्शे तु बौधायनः १०
" रजस्वला तु भुञ्जाना श्वान्त्यजादिं स्पृशेद्यदि । गोमूत्रयावकाहारा षड्रात्रेण विशुद्ध्यति ॥
" अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनमिति " ॥
" उच्छिष्टोच्छिष्टसस्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानैरुपोषितेति " ॥
अत्र पूर्वाशब्देन ब्राह्मणक्षत्रियवैश्यस्त्रियोऽभिधीयते । तेन रजस्वलयोः समानजातीययोः
रुच्छिष्टयोः । ब्राह्मणीक्षत्रियावैश्यानां परस्परं स्पर्शे प्राजापत्यः " स्वम्यानन्तरस्पर्शे १५
त्वेकैकवृद्धिरूहनीया । तादृशशूद्रयोः परस्परं तूपवाससहितप्राजापत्यप्रत्याम्नायदानेन
शुद्धिः " । एतच्च कामतः । अकामतस्तदर्द्धं । शूलपाणिस्तु
"उच्छिष्टेन तु सस्पृष्टा कदाचित्स्त्री रजस्वला । कृच्छ्रेण तु विशुद्ध्येत शूद्रा दानेन शुद्ध्यतीति"॥
पपाठ । तत्रोच्छिष्टेन चाण्डालादिना । दानेन कृच्छ्रप्रत्याम्नायेन । येषु रजस्वलात्वमेव
निमित्तमतो न क्षत्रियवैश्ययोर्ब्राह्मण्यादिभ्यो विशेष इति शूलपाणिः । २०
उच्छिष्टद्विजपस्पर्शे तु मार्कण्डेयः
"द्विजान्कथञ्चिदुच्छिष्टान् रजःस्त्री यदि सस्पृशेत् । अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेदिति"॥
अत्र यद्यप्यविशेषः श्रूयते तथापि ब्राह्मण्यपेक्षया उच्छिष्टक्षत्रियादिस्पर्शे ब्राह्मण्या आधिक्यं
कल्प्यं । एवं हीनाया उच्छिष्टोत्तमस्पर्शे न्यूनं ।
भोजनकाले रजस्वलान्तरं दृष्ट्वा पुनर्भोजने त्वापस्तंबः २५
' उदक्या यदि वा भुङ्क्ते दृष्ट्वाऽन्या तु रजस्वला । आस्नानकालं नाश्नीयाद्ब्रह्मकूर्चं ततः पिबेत् "॥
एतच्च कामतः । चाण्डालदर्शने त्वत्रिः
" रजस्वला तु भुञ्जाना चाण्डालं यदि पश्यति । उपवासत्रयं कुर्यात्प्राजापत्यं तु कामत इति "॥
रजस्वलायाः श्वादिदर्शने व्यासः

१ वस्तुतई-सस्पृष्टा शुना चाण्डालरासभैः ( २ न-वायसैः ) ३ वई-आद ।

" रजस्वला यदा दृष्टा शुना जंबुकरासभैः । पंचरात्रं निराहारा पंचगव्येन शुद्ध्यतीति " ॥
रजस्वलाया आशौचिस्पर्शे शातातपः
"आर्तवाभिप्लुता नारी स्पृशेच्चेच्छवसूतकं । ऊर्ध्वं त्रिरात्रं स्नातां तां त्रिरात्रमुपवासयेत् " ॥
स्पृष्ट्वा भोजनादौ अत्रिः
१ "आर्तवाभिप्लुता नारी मृतसूतकयोः स्पृशेत् । भुक्त्वा पीत्वा चरेत्कृच्छ्रं स्पृष्ट्वा तु त्र्यहमेव त्विति"॥
आशौचिस्पर्शे स्नानाप्राप्तभोजनदर्शने मार्कंडेयः
" मृतसूतकसंस्पर्शे ऋतुं दृष्ट्वा कथं भवेत् । नास्नानकालमश्नीयाद्भुक्त्वा चांद्रायणं चरेदिति"॥
आस्नानकालं चतुर्थदिनपर्यंतं । मदनरत्ने स्मृत्यंतरे
" अप्रायत्ये समुत्पन्ने मलवद्वाससा यदि । अभिषेकेण भुक्तिः स्यादिनत्रयमभोजनं" । अभि-
१० षेकेण भुक्तिः । सद्यःस्नानेन भोजनम् । इदमशक्तायाः । बालापत्याविषयं वा । अन्यस्यास्तु त्रिरात्रोपवासः । बंधुमरणश्रवणादौ व्यासः
" मलवद्वसनायास्तु अप्रायत्यं भवेद्यदि । अभिषेकेण शुद्धिः स्यान्नाशनं वा दिनत्रयमिति "॥
अत्रापि पूर्ववद्व्यवस्था । दिनत्रयमित्यवशिष्टकालोपलक्षणं । अप्रायत्यं बंधुमरणादि । स एव
" आर्त्तवाभिप्लुता नारी नावगाहेत्कदाचन । उद्धृतेन जलेनैव स्नात्वा शेषं समापयेत् ॥
१५ " स्नकं गात्रं भवेदद्भिः सांगोपांगमलैर्युतं । न वस्त्रपीडनं कुर्यान्नान्यवासा भवेत्पुनरिति "॥
तथा पराशरः
" स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रांतरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
" सिक्तगात्रा भवेदद्भिः सांगोपांगात्कथंचन । न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेदिति " ॥
अथ परंपरास्पर्शे । तत्राचेतनदंडादिव्यवधाने याज्ञवल्क्यः ( आ. १९८ )
२० "उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् । अब्लिंगानि जपेच्चैव गायत्रीं मनसा सकृदिति"॥
चेतनव्यवधाने तु मानवः " शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा कालेन शुद्ध्यतीति " ॥
अशुचिस्पृष्टस्पृष्टिस्पर्शे तु शातातपः
" अशुचिं संस्पृशेद्यस्तु एक एव प्रदुष्यति । तत्स्पृष्टान्यो न दुष्येत सर्वद्रव्येष्वयं विधिरिति"॥
तथा " संहतानां तु पात्राणां यद्येकमुपहन्यते । तस्य सच्छोधनं प्रोक्तं न तु तत्स्पृष्टिनामपि "॥
२५ क्वचिच्चेतनव्यवधाने तु वचनात्प्रायश्चित्ताधिक्यं । यथाहापस्तंबः
" एकशाखां समारूढश्चांडालादिर्यदा भवेत् । ब्राह्मणस्तत्र निवसन्स्नानेन शुचितामियात् " ॥
आदिशब्दादुदक्यादीनां ग्रहणं । शाखाग्रहणमवयव्युपलक्षणमिति प्राच्याख्यानं ।
तथा स एव

१ घ-अप्रयत्ये; घनयर-अप्रायते । २ ङ-च ।

" एकवृक्षसमारूढौ चांडालब्राह्मणौ यदि । फलं भक्षयतस्तत्र प्रायश्चित्तं कथं भवेत् ॥
" ब्राह्मणानामनुज्ञाप्य सवासाः स्नानमाचरेत् । अहोरात्रोपितो भूत्वा पंचगव्येन शुद्धयति "॥
तथा स एव
" एकशाखासमारूढः फलान्यश्नात्यसौ यदि । प्रायश्चित्तं त्रिरात्रं स्यात्पंचगव्यं विशोधनमिति"॥
अत्र व्यवधानसन्निधानाभ्यामेकरात्रत्रिरात्रे । मतिपूर्वे चैतत् । अमतिपूर्वे तु ब्रह्मपुराणे ५
" विप्रश्चंडालसहितो यत्रैकस्मिन्वनस्पतौ । अज्ञानात्तु फलं भुंक्ते चरेत्तत्राघमर्षणं " ॥
अत्रापवादमाह पराशरः ( ७।३६ )
" रथ्याकर्दमतोयानि नावः पंथास्तृणानि च । स्पर्शनान्न प्रदुष्यंति पक्केष्टकचितानि च " ॥
अत्र परंपरास्पर्शेऽपि स्पर्शशब्दो गौणः । तत्र वचनात्प्रायश्चित्तं ।
स्पर्शप्रायश्चित्तापवादमाह बृहस्पतिः १०
" तीर्थे विवाहयात्रायां संग्रामे देशविप्लवे । नगरग्रामदाहेषु स्पृष्टास्पृष्टिर्न दुष्यतीति "॥
एवमन्यान्यपि उच्चावचावचनानि व्यवस्थापनीयानि।
ब्राह्मणस्य चैत्यवृक्षादिस्पर्शे पराशरः ( १२।२९ )
" चैत्यवृक्षश्चितिर्यूपश्चांडालः सोमविक्रयी । एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेदिति "॥
क्षत्रियादीनां न्यूनं कल्प्यं । इत्यस्पृश्यस्पर्शप्रायश्चित्तानि । १५
अथ श्वादिदंशे । तत्र मनुः ( ११।१०९ )
" श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च । नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यतीति " ॥
प्राणायामे विशेषघृतप्राशनं चाह याज्ञवल्क्यः ( आ. २७७ )
" पुंश्चलीवानरखरैर्दष्टश्चोष्ट्रादिवायसैः । प्राणायामं जले कृत्वा घृतं प्राश्य विशुद्ध्यतीति "॥
एतच्च नाभेरधस्तादीषद्दष्टस्य । यत्तु सुमंतुः "श्वशृगालमृगाजमहिषानाविखरकरभनकुलमार्जार- २०
मूषिकाप्लवकाकपुरुषदष्टानामापोहिष्ठीयाभिः स्नानं प्राणायामत्रयं चेति " । एतच्च पादयोः
किंचिदधिकदंशे । यत्तु गर्गदेवलः " विषाणि [1]दंष्ट्रिः श्वसृगालविड्वराहखरनरवायसपुंश्चलीभि-
र्दष्टः स्रवंतीमासाद्य षोडश प्राणायामान्कुर्यादिति " । एतदपि ततोऽप्यधिकदंशे ।
नाभेरूर्ध्वं दंशे तु बौधायनः
" शुना दष्टस्तु यो विप्रो नदीं गत्वा समुद्रगां । प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यतीति"॥ २५
नाभेरधस्तादतिगाढदशविषयं वा । एतस्मिन्नेव विषये देवलः " श्वदष्ट सागरगाया नद्यां
स्नातो निराहारः प्राणायामशतमावर्तयंस्त्रिरात्रादपगतपाप्मा भवतीति " । तन्नाभेरूर्ध्वं
गाढदंशे । अत्रैव शंखः
"नीलीकाष्ठक्षतो विप्रः शुना दष्टस्तथैव च । त्रिरात्रं तु व्रतं कुर्यात्पुंश्चलीदशनक्षत "॥ इति।
यमोऽपि ३०

१ अई-जाति । २ ब-पर, इ-रार । ३ व-ष्ट्रि ।

" श्वशृगालशूकरखरोष्ट्रश्ववानरकुंजरैः। एतैस्तु ब्राह्मणो दष्टस्त्रिरन्हः समुपस्पृशेत् ॥
" हविष्यं भोजयेदन्नं ब्राह्मणान्सप्त पंच चेति "। ब्रह्मचार्यधिकारे हारीतः " शुना दष्टस्त्र्यहमेकाहारः समुद्रगां नदीं गत्वा प्राणायामशतं कृत्वा घृतं प्राश्य ततः शुचिरेवमेव गोमायुमार्जारनकुलमूषकैर्दष्टानां "। ब्रह्मचार्यधिकारे पैठीनसिरपि " शुना दष्टस्य त्रिरात्र-
५ मुपवासो विप्रगृहे वासश्च "। यत्तु शातातपः
" गवां शृंगोदकस्नातः शुना दष्टस्तु ब्राह्मणः। समुद्रदर्शनाद्वाऽपि शुना दष्टः शुचिर्भवेत् ॥
" वेदविद्याव्रतस्नातः शुना दष्टस्तु वै द्विजः। हिरण्योदकमिश्रं च घृतं प्राश्य विशुद्ध्यति "॥
तन्नाभेरधस्तादीषद्दष्टविषयं। वचनाद्विशिष्टब्राह्मणमात्रविषयं वा। समुद्रदर्शनं तत्तीरवासिनां।
व्रतस्थस्य विशेषमाह बौधायनः
१० " व्रतस्थस्तु शुना दष्टस्त्रिरात्रमुपवासयेत्। सघृतं यावकं पीत्वा व्रतशेषं समापयेत् " ॥
यत्तु शातातपः
" अव्रतः सव्रतो वाऽपि शुना दष्टो भवेद्विजः। हिरण्योदकमिश्रं तु घृतं प्राश्य विशुद्ध्यतीति"॥
तदन्यैताशक्तविषयं। ब्राह्मणरहितग्रामे तु पराशरः ( ५।९ )
" असद्ब्राह्मणके ग्रामे शुना दष्टो द्विजोत्तमः। वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा शुचिर्भवेत्" ॥
१५ स्त्रीणां विशेषमाह पराशरः
" ब्राह्मणी तु शुना दष्टा जंबुकेन वृकेण वा। उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् " ॥
बौधायनोऽपि
" ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत्। नक्षत्रदर्शनाद्वाऽपि शुना दष्टा शुचिर्भवेत्॥
" कृष्णपक्षे यदा सोमो न दृश्येत कदाचन। यां दिशं व्रजते सोमस्तां दिशं त्ववलोकयेदिति "॥
२० अंगिरसा तत्र पंचगव्यप्राशनमप्युक्तं
" ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत्। यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत्॥
"यां दिशं तु गतः सोमस्तां दिशं चावलोकयेत्। सोममार्गेण सा पूता पंचगव्येन शुद्ध्यतीति"॥
ब्राह्मणीग्रहणमुपलक्षणम्। व्रतस्थस्त्रीविषये पराशरः
" त्रिरात्रमेवोपवसेच्छुना दष्टा तु सव्रता। सघृतं यावकं भुक्त्वा व्रतशेषं समापयेत् " ॥
२५ रजस्वलायां विशेषमाह पुलस्त्यः
" रजस्वला यदा दष्टा शुना जंबूकरासभैः। पंचरात्रं निराहारा पंचगव्येन शुद्ध्यति ॥
" ऊर्ध्वं तु द्विगुणं नाभेर्वक्रे तु त्रिगुणं तथा। चतुर्गुणं स्मृतं मूर्ध्नि दष्टेऽन्यत्राप्लुतिर्भवेदिति"॥
अन्यत्र रजस्वलावस्थाया इति शेषः। शुनाघ्रातादिषु शातातपः

" शुनाघ्रातावलीढस्य नखैर्विदलितस्य च । अद्भिः प्रक्षालनं शौचमग्निना चोपचूलनमिति " ॥
उपचूलनं तापनं । व्रणे कृम्युत्पत्तौ तु बौधायनः
" ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे । कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं । त्र्यहं स्नात्वा च पीत्वा च कृमिदुष्टः शुचिर्भवेदिति"॥
एतच्च नाभेरधस्ताज्ज्ञेयं । मनुरपि ९
" ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे । कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
" गवां मूत्रपुरीषेण त्रिसंध्यं स्नानमाचरेत् । त्रिरात्रं पञ्चगव्याशी त्वधो नाभ्या विशुद्ध्यति ॥
" नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः । षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे "॥इति ।
यत्तु शातातपः
" ब्राह्मणस्य व्रणद्वारे यदा संपद्यते कृमिः । प्रायश्चित्तं तदा कार्यमिति शातातपोऽब्रवीत् ॥ १०
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं । स्नात्वा पीत्वा च कृत्वा च कृमिदुष्टः शुचिर्भवेदिति "॥
तदीषद्दुष्टविषयं । पराशरेण तु वर्णभेदेन प्रायश्चित्तभेद उक्तः ( ९।४९-५४ )
" ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे । कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
" गवां मूत्रपुरीषेण दधिक्षीरेण सर्पिषा । त्र्यहं स्नात्वा च पीत्वा च कृमिदुष्टः शुचिर्भवेत् ॥
" क्षत्रियोऽपि सुवर्णस्य पञ्चमाषान्प्रदापयेत् । गोदक्षिणां तु वैश्यस्याप्युपवासं विनिर्दिशेत् ॥ १५
" शूद्राणां नोपवासः स्यात् शूद्रो दानेन शुद्ध्यतीति " । स्नानं पानं च पञ्चगव्येनैव । दानं
गोदानं । एतदपि नाभेरधस्ताज्ज्ञेयम् । नाभेरुपरि विशेष उक्तो भविष्यत्पुराणे
" ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे । कृमिरुत्पद्यते यस्य निष्कृतिं वच्मि तस्य तु ॥
" गवां मूत्रपुरीषेण त्रिसंध्यं स्नानमाचरेत् । दधिक्षीरघृतं प्राश्य त्रिरात्रेण विशुद्ध्यति ॥
" अधो नाभेः प्रदुष्टस्य आपादाद्विनतात्मज । एतद्विनिर्दिशेत्प्राज्ञः प्रायश्चित्तं खगाधिप ॥ २०
"नाभिकण्ठान्तरे वीर यदा चोत्पद्यते कृमिः । षड्रात्रं तु तदा प्रोक्तं प्रायश्चित्तं मनीषिभिरिति"॥
एवमन्यान्यपि वचनानि व्यवस्थापनीयानि । इति संसर्गप्रायश्चित्तम् ।
अथोपपातकेषु प्रायश्चित्तानि । तान्याह याज्ञवल्क्यः ( प्रा २३४–२४२ )
" गोवधो व्रात्यतास्तेयमृणानां चानपक्रिया । अनाहिताग्निता पण्यविक्रयः परिवेदनं ॥
" भृताद्ध्ययनादानं भृतकाध्यापनं तथा । पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ॥ २१
" स्त्रीशूद्रविट्क्षत्रवधो निंदितार्थोपजीवनं । नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥
" धान्यकुप्यपशुस्तेयमयाज्यानां च याजनं । पितृमातृसुतत्यागस्तडागारामविक्रयः ॥
" कन्यासंदूषणं चैव परिविंदकयाजनं । कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनं ॥
" आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् । स्वाध्यायाग्निसुतत्यागो बांधवत्याग एव च ॥

" इंधनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनं । हिंस्रयंत्रविधानं च व्यसनान्यात्मविक्रयः ॥
" शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् । तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥
" असच्छास्त्राधिगमनमाकरेष्वधिकारिता । भार्याया विक्रयश्चैषामेकैकमुपपातकमिति " ॥
तत्र गोवध उक्तं वधप्रायश्चित्तप्रसंगेन । तत्रत्यान्येव मानवानि त्रैमासिकादीनि याज्ञ-
५ वल्क्यीयानि च चांद्रायणादीनि वक्ष्यमाणेषु व्रात्यतादिष्वपि विशेषविहितैः प्रायश्चित्तैः सह तुल्यविकल्पतया व्यवस्थया वा योज्यानि । न च विशेषविहितैः सामान्यविहितानां बाधः । उपपातकसंज्ञानार्थक्यापत्तेः। सामान्यप्रायश्चित्तप्रवृत्त्यैव हि सार्थवती नान्यथा प्रयोजनांतराभावात् । अत एव याज्ञवल्क्यः ( प्रा. २६६ ).
" उपपातकशुद्धिः स्यादेवं चांद्रायणेन च । पयसा वापि मासेन पराकेणाथवा पुनरिति " ॥
१० मनुश्च ( ११।११७ ).
"एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः । अवकीर्णिवर्ज्यं शुद्ध्यर्थं चांद्रायणमथापि वेति " ॥
एतदेव त्रैमासिकम् । अवकीर्णिपर्युदासादेवोक्तामुक्तप्रायश्चित्तेष्वेतत्प्राप्तिर्गम्यते ।
अथ व्रात्यतायाः । याज्ञवल्क्यः ( आ. ३७ ).
"आ षोडशाद्वा द्वाविंशाच्च चतुर्विंशाच्च वत्सरात् । ब्रह्मक्षत्रविशां काल औपनायनिकः परः"॥इति ।
१५ अत्र " सावित्री पतिता यस्य दशवर्षाणि पंच च । सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥
" एकविंशतिरात्रं च पिबेत्प्रसृतियावकं । हविषा भोजयेच्चैव ब्राह्मणान्सप्त पंच च ॥
" ततो यावकशुद्धस्य तस्योपनयनं स्मृतमिति " व्यासोक्तेः षोडशादित्याङ्मर्यादायां नाभिव्याप्तौ । द्वाविंशाच्चतुर्विंशाच्चेत्यत्रापि चतुर्दशैक एवानुपयुज्यते । तेन पंचदशैकविंशतित्रयोविंशतिवर्षसमाप्त्युत्तरमेव विप्रक्षत्रियविशां क्रमात्पातित्यमिति । याज्ञवल्क्यः (आ. ३८)
२० " अत ऊर्ध्वं पतंत्येते सर्वधर्मबहिष्कृताः । सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोरिति "॥
एतदशक्तस्योद्धर्तुमनुविष्णू ( ९४।२६ )
"येषां द्विजानां सावित्री नान्वृच्येत यथाविधि तांश्चारयित्वा त्रीन् कृच्छ्रान्यथाविध्युपनाययेदिति"॥
यद्वा तूपनेत्रभावकृता व्रात्यता तदा पूर्वोक्तमेकविंशतिरात्रं । उपनेत्रसत्त्वे कामतः पंचदशवर्षातिक्रमे वसिष्ठ आह ( ११।७६ ) " पतितसावित्रीकः उद्दालकव्रतं चरेत् ।
२५ द्वौ मासौ यावकेन वर्तयेन्मासं पयसाऽर्द्धमासमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमब्भक्षः अहोरात्रमुपवसेदिति " । यत्त्वापस्तंबः " अतिक्रांते सावित्र्याः काल ऋतुत्रयं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं । ततः संवत्सरमुदकोपस्पर्शनमथाध्याप्य "इति ।
ब्राह्मणादीनां षोडशवर्षात्मक उपनयनकालेऽतिक्रांते ऋतुं मासद्वयं त्रैविद्यकं

१ घघरूयईर-स्य मनुः । २ घयर-श्रीं । ३ घ-क,

वेदत्रयार्थं भैक्षाशनं गुरुशुश्रूषणादिकं । तदुद्दालकव्रताशक्तस्य । स एव " यस्य पिता पितामह इत्युपनीतौ स्यातां ते ब्रह्महसंस्तुतास्तेषां गमनं भोजनं विवाहमिति वर्जयेत्तेषामिच्छतां प्रायश्चित्तं । यथा प्रथमेऽतिक्रमे ऋतुमेवं संवत्सरमथोपनयनं तत उदकोपस्पर्शनं प्रतिपुरुषसंख्याय संवत्सरान्यावतोऽनुपनीताः स्युः सप्तभिः पावमानीभिर्यदंति यच्च दूरक इत्येताभिर्यजुःपवित्रेण सामपवित्राणा ५ गिरसेनेत्यपि वा व्याहृतिभिरेव वा सोऽध्याप्योऽथ यस्य प्रपितामहादीनां न स्मर्येत उपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधोपदेशनं नाध्यापनं ततो योऽभिवर्त्तेते तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत ऊर्ध्वं प्रकृतिवदिति " । ब्रह्महसंस्तुता । ब्रह्महशब्दवाच्या । यथा प्रथमेऽतिक्रमे ऋतुमेव संवत्सरमिति । प्रथमातिक्रमवद्दतुस्थाने संवत्सरस्तेन प्रतिपुरुषं यब्दं ब्रह्मचर्यमुपनयनानंतरं यावतोऽनुपनीताः पुरुषास्तावत्संख्याकवर्षपर्यंतं १० प्रत्यहमेभिर्मंत्रैः प्रायश्चित्तार्थस्नानं कार्यम् । तत्र मंत्राः । 'यदंति यच्चेति' सप्त पावमान्यो । 'येन देवाः पवित्रेणेति' यजुःपवित्रं । "कया न इति" सामपवित्रं । "हंसः शुचिषत्" इत्यागिरसं । श्मशानसंस्तुता श्मशानवन्निरसनीया । द्वादशाब्दं ब्रह्मचर्यप्रायश्चित्तं । उदकोपस्पर्शनं तु पुरुषसंख्याकाब्दानि यावत् । मंत्रास्त एव । गृहमेधो गार्हस्थ्यं । तेषामध्यापनं नास्ति । ततः उत्पन्नस्य प्रकृतिवत् । यथाकालोपनयनमिति ॥ १५

इति व्रात्यता ।

अथ ऋणनापाकरणे । तच्चतुर्विधं । परद्रव्यमृणत्वेन गृहीत्वा तस्याप्रदानं । तथा " जायमानो वै ब्राह्मणस्त्रिभिः ऋणवां[1] जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य " इति । यज्ञेनेति सत्यधिकारे । मनुः ( ११।२७ )

"इष्टिं वैश्वानरीं नैत्र निर्वपेदब्दपर्यये । क्लृप्तानां पशुयज्ञानां निष्कृत्यर्थमसंभवे" ॥ इति । २० अब्दपर्यये । संवत्सरांते क्लृप्तानां प्रारब्धानामिति केचित् । नित्यतया क्लृप्तानामिति तु युक्तं । प्रजापतिः " समाते सोमयज्ञानां[2] हानौ चांद्रायणं चरेदिति " । तथा स्वाधिकोत्तरवर्षगणनया कामाकामयोस्त्रैमासिकचांद्रायणादीनि योज्यानि । अतश्च

" प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा । कर्त्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥ " एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विज " इति ( आ १२५-१२६ ) याज्ञवल्कीयमपि २५ सोमादेर्द्वितीयादिवर्षेष्वननुष्ठाने वेदितव्यं ।

अथानाहिताग्नितायां प्रायश्चित्तं । तच्च सत्यधिकारे आधानाभावे वेदितव्यं । तत्रानाहिताग्नेः संवत्सरादूर्ध्वमापदि याज्ञवल्कीयमुपपातकसामान्यव्रतचतुष्टयं वर्णशक्त्याद्यपेक्षया योज्यम् । अनापदि तु तत्रैव मासिकम् । अर्वाक्तु संवत्सरात्कार्ष्णाजिनिराह

१ छ-ऋणवान् । २ छ-सोमानां । ३ खघ-र्जा । ४ यछ-पु ।

" काले त्वाधाय कर्माणि कुर्याद्विप्रो विधानतः । तदकुर्वंस्त्रिरात्रेण मासि मासि विशुद्ध्यति "॥
काल इत्यधिकारोपलक्षणं । तदाधानं । स एव
" अनाहिताग्नौ पित्रादौ यक्ष्यमाणः सुतो यदि । स हि व्रात्येन पशुना यजेतर्त्विक्क्रयाय तु "॥
यक्ष्यमाण आधाता यथा चेति **स्मृत्यर्थसारे** । व्रात्येन क्रियमाणो व्रात्येन वा निमित्तेन
५ विहितः पशुरिति वैय्यधिकरण्येनान्वयः । अत्र व्रात्यो यथाकालेऽनुपनीतो न गृह्यते तत्र
व्रात्यस्तोमाख्यसोमयागविशेषस्यैव विधानात् । किंतु यस्य पितामहो वा सोमं न पिबेत्स व्रात्य
इति वाक्योक्तो गृह्यते । तस्यैव व्रात्यपशोर्विधानात् । तथा च श्रुतिः " यस्य पिता
पितामहः सोमं न पिबेदथ पिपासेत्स ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेति " । आवसथ्याधानेऽपि
विशेषमाह **कार्ष्णाजिनिः**
१० " कृतदारो गृहे ज्येष्ठो योऽनादध्याद्रुपासनं । चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वेति "॥
ज्येष्ठग्रहणात्तस्मिन्नकृतावसथ्याधाने कनिष्ठस्यानधिकार उक्तः । जेष्ठोऽपि पितर्यकृताव-
सथ्याधाने सति नादध्यात् । " पितुः सत्यप्यनुज्ञाने नाधीयीत कथंचन " इत्यस्य
स्मार्त्ताधानेऽपि प्रवृत्त्यविशेषात् । तथा ज्येष्ठग्रहणात्कनिष्ठः कृतदारोऽपि गृहपतिमरणाद्वि-
भागात्प्रागनधिकारित्वान्न प्रायश्चित्तीयत इति सिद्धं च । प्रायश्चित्तं च " आवसथ्याधानं
१५ दारकाले दायाद्यकाले प्रेते वा गृहपताविति " कात्यायनोक्तकालत्रयातिक्रमे द्रष्टव्यं ।
**अथाविक्रेयविक्रये प्रायश्चित्तानि । शंखलिखितौ** " न विक्रीणीयादविक्रेयाणि ।
तिलतैलदधिक्षौद्रलवणद्राक्षामद्यमांसकृतान्नस्त्रीपुरुषहस्त्यश्ववृषगर्दभक्षौमकृष्णाजिनसोमोदक-
नीलीविक्रयात्सद्यः पतति ब्राह्मण " इत्युपक्रम्य " वत्सरं तप्तकृच्छ्रमाचरेदिति " ।
**हारीतः** " गुडतिलपुष्पमूलफलपक्वान्नविक्रये सोमायनम् । लाक्षालवणमधुमांसतैल-
२० क्षीरदधिघृतगन्धचर्मवाससामन्यतमविक्रये चान्द्रायणं । तयोर्णकेशिनेशफरिभूधेनुवेश्माश्म-
शस्त्रविक्रये च । मत्स्यमांसस्नाय्वस्थिशृंगनखशुक्तिविक्रये तप्तकृच्छ्रं । हिंगुगुग्गुल-
हरितालमनःशिलाञ्जनगैरिकक्षारलवणमणिमुक्ताप्रवालवैणववेणुमृन्मयेषु च । आरामतडागोदपान
पुष्करिणीसुकृतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो दशसहस्रं जपन् गायत्रीं
संवत्सरेण पूतो भवति । हीनमानोन्मानसंकरव्याजद्रव्यसंकीर्णविक्रये नेति " ।
२५ **पराशरः** " विक्रीय कन्यकां गां च कृच्छ्रं सांतपनं चरेदिति " । चतुर्विंशतिमते
" सुराया विक्रयं कृत्वा चरेत्सौम्यचतुष्टयं । लाक्षालवणमांसानां चरेच्चान्द्रायणत्रयं ॥
" मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयं । पयःपायसपूपानां चरेच्चान्द्रायणव्रतं ॥
" दध्नश्चेक्षुरसस्यैव गुडखण्डादिविक्रये । सर्वेषां स्नेहपक्वानां पराकं [१] समाचरेत् ॥
" कदलीं नारिकेलं च नारिंगं बीजपूरकं । एतेषां पादकृच्छ्रं स्याज्जंबीरादेस्तथैव च ॥

१ घ–व्रात्येन । २ घ–त्स, यत–ब ।

" कस्तूरिकादिगन्धानां विक्रये कृच्छ्रमाचरेत् । कर्पूरादेस्तदर्द्धं स्याद्दिन हिंग्वादिविक्रये ॥
" तिलानां विक्रयं कृत्वा प्राजापत्यं समाचरेत् । धर्मार्थं कृमिजातांश्च यज्ञार्थं विक्रयं नयेत् ॥
" रक्तपीतादिवस्त्राणि कृष्णाजिनमथापि वा । विक्रये त्र्यहमेतेषां गर्गस्य वचनं यथा ॥
" गोविक्रयं नरः कृत्वा लाभार्थं धनमोहितः । प्राजापत्यं प्रकुर्वीत गजानामेव स्मृतम् ॥
" खराश्वाश्वतराणां च करभाणां च विक्रये । पराकं तत्र कुर्वीत सुतानां द्विगुणं चरेत् ॥ ५
" नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतं । द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः ॥
" चान्द्रायणं प्रकुर्वीत एकशफाद्देवविक्रये । अजानां तु पराकं स्यात्स्मृतीनां कृच्छ्रमाचरेत् ॥
" इतिहासपुराणानां चरेत्सांतपनं द्विजः । रहस्यपञ्चरात्राणां कृच्छ्रमेव समाचरेदिति " ॥
" अङ्गानां नीतिशास्त्राणां प्राकृतानां तथैव च । सर्वासामेव विद्यानां पादकृच्छ्रं समाचरेदिति" ॥
च्यवनः " दधिमधुपिष्टसर्पिःपक्वान्नतैललवणक्षीररसविषशस्त्रतिलाश्मनीलीकौशेयवासोलाक्षा १०
रक्तलवणविक्रये प्राजापत्यं चरेत् " ॥ शातातपः
" आममांससुरासोमलाक्षालवणसर्पिषां । विक्रये सर्वपण्यानां द्विजश्चान्द्रायणं चरेत् " ॥
विष्णुः ( ५४।२०, १७ ) " रसकम्बरगरत्नगुडगन्धमधुरसोर्णाविक्रयी निरात्रमुपवसेत् ।
प्राणिभूपण्यसोमविक्रयी तप्तकृच्छ्रं कुर्यात् । तं च भूयश्चोपनयेत् ॥ " शंखः
" धारयित्वा तुलां वक्रां विषमां कारयन्वणिक् । सुरालवणमद्यानां कृत्वा क्षीरस्य विक्रयं ॥ १५
" लाक्षायाश्चैव मांसस्य कुर्यादेन महाव्रतं । विक्रेता प्राणिनामर्द्धं तिलस्य च तथाचरेदिति" ॥
महाव्रतं द्वादशाब्दं । भूयोभ्यासविषयमेतत् ।
अथाविक्रेयाणि । पैठीनसिः ब्राह्मणस्य लवणं पक्वान्नं मधु क्षीरं दधि घृतमुदकं सर्वगन्धास्तिला
रक्तं वासोगुडतैलग्राम्यपशूनामेकशफं केशरिणश्च सर्वे चारण्याः पशवो विद्या गाव
शणश्चोर्णश्चेति विक्रयणेनैकैकस्मिन्प्राजापत्यं चरेदिति " । तथा पुनः स एव "आराम २०
तडागोदपानपुष्करिणीसुकृतसोमविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारः संवत्सरेण
पूतो भवतीति" । सुमंतुः " देवर्षिसोमचैत्यात्मापत्यकूपोदपानदानात्मना विक्रये कृच्छ्रत्रयं
चरेदिति " । देवर्षीति प्रतिमाभिप्रायेण । भविष्यपुराणे
" गुडं तिलास्तथानीलीं वेशगोधूमशल्यकाः । विक्रीय ब्राह्मणो गां च कृच्छ्रं सांतपनं चरेदिति" ॥
गोविक्रये निंदार्थवादमाह यमः २५
" गवां विक्रयकारी तु यानि रोमाणि यानि तु । तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेदिति" ॥
एतानि च लघुगुरुप्रायश्चित्तानि कामाकामसकृदसकृच्छक्त्याद्यपेक्षया योजनीयानि ।
एतन्निमित्तव्यतिरिक्तेषु तूपपातकसामान्यप्रायश्चित्तानि तथैव योज्यानि । इदं च सर्वप्रायश्चित्त
जातमापदि वैश्यवृत्त्या जीवतो ब्राह्मणस्यैव । इतरेषां त्वापदि न दोषः ।

---

१ अर्द्ध+म्या, +नघयर-गाथा २ ईश-मू० ।

"वैश्यवृत्त्या च विक्रेय ब्राह्मणस्य पयोदधीति" नारदस्मृतेरिति मिताक्षरायां। यत्र च निषेधस्तत्रैव प्रायश्चित्तविषयं प्रवर्तते। अत एव कश्चित्प्रायश्चित्तविधौ ब्राह्मणग्रहणं कृतं। शूलपाणिस्त्वापदि शूद्रस्यैव दोषाभावमाह। तथा च पराशरः ( ११६२ )

"लवणं मधु मद्यं वा दधि तक्रं घृतं पयः। न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयं"॥

५ कालिकापुराणेऽपि

"विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक्मधु चर्म सुरां लाक्षां त्यक्त्वा मांसं च पञ्चममिति"॥

तन्न। अनयोर्वचनयोरापद्विषयत्वे प्रमाणाभावात्। न च निषेधानामापदि ब्राह्मणमात्रविषयत्वाच्छूद्रे प्रतिप्रसवानुपपत्तिरिति वाच्यम्। 'शूद्रस्य द्विजशुश्रूषयेति' नियमेनोपायान्तराणां व्यावर्तितत्वात्। अतश्च शूद्रस्य नापद्यपि मद्यादिव्यतिरिक्तानि विक्रेयाणि।

१० क्षत्रियवैश्ययोस्त्वनापदि शूद्रवत्प्रतिप्रसवाभावात्सर्वाण्यविक्रेयाणि। आपदि त्वदोषः। निषेधानां प्रायश्चित्तानां ब्राह्मणमात्रविषयत्वोक्तेः। ब्राह्मणानामेव त्वापदि वैश्यवृत्त्या जीवतो दोष इति निष्कर्षः। इदं च प्रायश्चित्तजातमपण्यविक्रयार्जितधनपरित्यागपूर्वकं कार्यमित्याह मनुः ( ११।१९२ )

"यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनं। तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव वेति"॥

१५ अत्र च जपतपसोर्विकल्पः। कृष्यादिग्रहणं नियमार्थं। तेन क्रीतानां तिलानां विक्रये दोष एव। इत्यपण्यविक्रये। परिवेत्त्रे उक्तं। भृतकाध्यापकभृतकाध्यापितयोश्च पूर्वोक्तव्रतानि देशकालशक्त्यपेक्षया योज्यानि। अशक्तस्य विष्णुराह

"भृतकाऽध्यापनं कृत्वा भृतकाध्यापितस्तथा। अनुयोगप्रदानेन त्रीन्पक्षान्नियतं पिबेदिति"॥

ब्राह्मीं सुवर्चलामिति शेषः। अधीयानस्य विप्रस्य तिरस्कारोऽनुयोग इति मिताक्षरायां।

२० अथ सुतानां विक्रये पैठीनसिः "सुतविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारः संवत्सरेण पूतो भवति"। इदं चैकपुत्रस्य कामतोऽनापदि। "सुतविक्रयं कृत्वा तप्तकृच्छ्रं चरेदिति" शङ्खोक्तं त्वापद्यनेकपुत्रस्याकामतो ज्ञेयं। अत्रैव कामतस्तु देवर्षिसोमचैत्यानापत्यत्रयोदपानद्यारात्मना विक्रये कृच्छ्रद्वयमिति" सुमन्तूक्तं। कामतोऽनेकपुत्रस्यानापदि कन्यापुत्रयोर्विक्रेतुश्चतुर्विंशतिमते

२५ "नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतं। द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः"॥ इति "आपद्यकामतः कन्याविक्रये तु विक्रीय कन्यकां गां च कृच्छ्रं सान्तपनं चरेदिति" वृद्धपराशरोक्तं। इत्यपत्यविक्रये। अथायाज्ययाजने मनुः ( ११।१९७ )

"व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति"॥

परेषां शूद्रादीनां अन्त्यकर्मौर्ध्वदैहिकं। यद्वा परेषामसपिण्डानां स्वजातीयानामेव। अस्मिन्पक्षे

१ घ–दुर्जिते। २ ग–अनने। ३ अहदय–वाकामता। ४ छ–जे। ५ छ–म्यते।

आवृत्तावेतत्प्रायश्चित्त । अत्र चैकस्यैव कृच्छ्रस्याभ्यास । सत्याया पृथक्त्वनिवेशित्वात् । तेन भिन्नास्त्रय कृच्छ्रा कार्या । ते च प्राजापत्यसातपनातिकृच्छ्राख्या इति शूलपाणिः। तेपा च गुरुलघुभूताना नित्य निमित्तगौरवत्वाद्यपेक्षया योज्य। अहीनो द्विरात्रादि-द्वादशाहपर्यंतोहर्गणयाग ।एतच्चाकामत उपपातकसामान्यप्रायश्चित्तापवादार्थं। व्रात्यकामतो याजने तु शातातपः "पतितसावित्रीकन्नोपनयेन्नाध्यापयेद्य एतानुपनयेद्याजयेद्वा स उद्दालकव्रत चरेदिति"। उद्दालकव्रत तु व्रात्यताप्रायश्चित्ते उक्त । यत्तु पैठीनसिः ५

"शूद्रयाजक सर्वद्रव्यत्यागात्पूतो भवति।प्राणायामसहस्रेषु दशकृत्वोऽभ्यस्तेष्विति"तदकामतो ऽभ्यासविषय । अत्रैव कामतोऽभ्यासे तु शूद्रयाजकादीन्पठित्वा उशना आह "एते पंचतपोऽभ्रावकाशजलशयनान्यनुतिष्ठेयु । क्रमेण ग्रीष्मवर्षाहेमतेषु मास गोमूत्रयावकमश्नीयु रिति"। यत्तु यमः १०

"पुरोधा शूद्रवर्णस्य ब्राह्मणो य प्रवर्त्तते।लोभादर्थप्रसगाद्वा तस्य कृच्छ्रो विशोधनमिति"। तदकामतोऽशक्तविषय । चडालादिसन्निधौ श्रुत्यादीनामकामत. पाठे तु षट्त्रिंशन्मते। "चडालश्रोत्रावकाशे श्रुतिस्मृतिपाठे त्वेकरात्रमिति"। यत्तु वसिष्ठः "पतितचडाल-शवश्रवणे त्रिरात्र वाग्यता अनश्नत आसीरन्सहस्रपरम वा तदभ्यस्यन्त पूता भवतीति विज्ञायत इत्यनेनैव गर्हिताध्यापकयाजकयाजका व्याख्याता दक्षिणात्यागाच्च पूता भवतीति" १५

तद्बुद्धिपूर्वविषयमिति विज्ञानेश्वरः। इत्ययाज्ययाजनं।

अथ पितृमातृसुताचार्यभार्यात्यागे । तत्र श्राद्धप्रकरणे "अकारणे परित्यक्ता मातापित्रोर्गुरोस्तथे" त्यपाक्तेयमध्ये पाठ । तत्र प्रायश्चित्तमाह मनुः ( ११।२०० ) "पञ्चात्काल्वा मास सहिताजप एव हि। होमश्च शाकले नित्यमपाक्तयाना विशोधनमिति"॥ शाकलं 'यद्देवा देवहेलनमि'त्यादियजुर्मंत्रकारगणक । २०

अथ कन्यासंदूषणे। तत्र सवर्णकन्यादूषणे त्रैमासिकद्वैमासिकचान्द्रायणानि क्रमेण कामाकामशक्त्याद्यपेक्षया योज्यानि। आनुलोम्येन तु दूषणे मास पयोव्रतप्राजापत्य वा पूर्व-वद्योज्य "सकामास्वनुलोमासु न दोषस्त्वन्यथा दम" इति तत्र दडस्याल्पत्वात्। प्रातिलोम्येन तु दूषणे क्षत्रियवैश्ययो शंख आह 'कन्यादूषी सोमविक्रयी च कृच्छ्रमब्द चरेयातामिति"। हारीतोऽपि कन्यादूषीत्याद्युपक्रम्य "एते पचतपोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्म- २५ वर्षाहेमतेषु मास गोमूत्रयावकमश्नीयुरिति"। शूद्रस्य तु प्रातिलोम्येन कन्यादूषणे वध एव "दूषणे तु करच्छेद उत्तमाया वधस्तथेति" वचनात्। इति कन्यादूषणे।

अथाग्नित्यागे। तत्र मनुः ( ११।४१ )

"अग्निहोत्र्यपविध्याग्नीन् ब्राह्मण कामकारत। चान्द्रायण चरेन्मास वीरहत्यासम हि तत्"॥

१ ग्र-कामत। २ ग्र-सुतभार्या ई-तामनुत्तरा चापि भार्या त्यागस्य कारणे। ३ ग्र-त्र।

अपविध्य त्यक्त्वा। वीरो यजमानः। मासमपविद्धेत्यन्वयः। इदं च कामतः। यत्तु हारीतः "संवत्सरोत्सन्नेऽग्निहोत्रे चांद्रायणं कृत्वा पुनरादध्यात्। द्विवर्षोत्सन्ने सोमायनचांद्रायणे कुर्यात्। त्रिवर्षोत्सन्ने संवत्सरकृच्छ्रमभ्यस्य पुनरादध्यादिति"। तदकामे ज्ञेयं। शंखस्तु त्रिवर्षोत्सादे गोदानमप्यधिकमाह "अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेद्गां च दद्यादिति"।

५ विष्णुरपि (५४।१३) "वेदाग्न्युत्सादी त्रिषवणस्नायी अधःशायी संवत्सरं भैक्षेण वर्त्तयेदिति"। कामतस्त्वेतान्येव स्वस्वविषये द्विगुणानि। यत्तु वसिष्ठः (३। ३) "योऽग्नीनपविध्येत्स कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधानं कारयेदिति"। व्याघ्रः "मासद्वयं तु यो वह्निं त्यजेदेवं समाचरेत्। नास्तिक्यात्कृच्छ्रमेकं तु होमद्रव्यं ददाति चेत्"॥ होमद्रव्यं यावत्कालं होमो न कृतस्तावद्धोमपर्याप्तं। तथा च भरद्वाजगृह्ये

१० "यावत्कालमहोमी स्यात्तावद्द्रव्यमशेषतः। तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव चेति"॥ जातूकर्ण्योऽपि

"अतीतकालं जुहुयादग्नौ विप्राय वा स्वयं। दद्याद्वेदविदे सम्यक् कृत्वाऽऽधानं पुनर्द्विज"॥ इति। इदं च होमद्रव्यदानं स्मार्त्ताग्नित्यागविषयमिति माधवः। उभयत्यागेऽपि युक्तमिति तु प्रतिभाति। मासचतुष्टयत्यागे तु स एव

१५ "चतुष्टये तु संपूर्णे मासानां तु हुताशनं। त्यक्त्वाऽपि कृच्छ्रं कुर्वीत ततः पापात्प्रमुच्यते"॥ षण्मासत्यागे पराकः। अत ऊर्ध्वमब्दपर्यंतं पयोव्रतं। यथाहोशनाः

"षण्मासांस्त्यजते यो वै पराकं तु समाचरेत्। ऊर्ध्वं पयोव्रतं कुर्यान्मासमेकं समाहितः॥ वर्षपर्यंतमेवाहुर्मुनयः शंसितव्रताः"। मासषट्कादूर्ध्वं संवत्सरं यावद्याज्ञवल्क्योक्तान्युपपातकसामान्यप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया योजनीयानि। संवत्सरादूर्ध्वं तु

२० मनूक्तद्वैमासिकत्रैमासिके कालाल्पत्वमहत्वापेक्षया योज्ये। एतानि च सर्वप्रायश्चित्तानि नास्तिक्यादग्नित्यागे। यदा तु प्रमादात्त्यजति तदा भरद्वाजगृह्ये विशेष उक्तः "प्राणायामशतमा त्रिरात्रादुपवासः स्यादा विंशतिरात्रात्। अत ऊर्ध्वमा षष्टिरात्रात्तिस्रो रात्रीरुपवसेत्। अत ऊर्ध्वं मासं वत्सरात् प्राजापत्यं चरेत्। अत ऊर्ध्वं कालबहुत्वे दोषबहुत्वमिति"। इदमेव वा कामतो गृह्याग्नित्याग इत्यपरार्के। अत्रैव विषये स्कांदे

२५ "हुताशनं तु यो विप्रः प्रमादात्त्यजति प्रभो। प्राणायामशतं कुर्यादुपवासमथापि वेति"॥ कामतस्त्यागेऽपि तत्रैव। द्वादशाहातिक्रमे त्र्यहमुपवासः। मासातिक्रमे द्वादशाहमुपवासः। संवत्सरातिक्रमे मासोपवासः पयोभक्षणं वा। कूष्मांडीभिर्होमः क्रमेणोभयं चेति। उपवासाशक्तौ मासं पयोभक्षणं। संवत्सरानंतरमधिककालातिक्रम उभयमिति मदनपारिजाते। इदमेव चाल्पेन श्रौताग्नित्यागविषयमिति। तथा च स्मृत्यंतरे

१ घ-विप्रेऽथ।

"आलस्येन यदा वर्न्हि द्वादशाह त्यजेत्प्रभो। त्रिरात्रमुपवास च चरेत्पापविशुद्धय" ॥ इति । इत्यग्नित्यागे । कौमारदारत्यागे तु विशेषमाह शातातपः "कौमारदारत्यागान्मासं पयोभक्ष शुद्धयति" । इद चाल्पकालत्यागे । बहुकालत्यागे तु कौमारदारत्याग प्रक्रम्य हारीतः "पचतपोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमन्तेषु मास गोमूत्रयावकमश्नीयुरिति" ॥ अथ द्रुमच्छेदे मनुविष्णू ( ११।१४२ विष्णु ५०-४८ )

"फलदाना च वृक्षाणा छेदने जप्यमृक्शत । गुल्मवल्लीलताना च पुष्पिताना च वीरुधा" ॥ यत्तु यमः ' वृक्षलतागुल्मतृणच्छेदनेऽर्धकृच्छ्र फलवता प्राजापत्यमिति " । प्रायश्चित्तविवेकेऽपरार्के च " वृक्षगुल्मलतावीरुच्छेदने वृद्धकृच्छ्र " । इति पाठ उक्त । वृद्धकृच्छ्रो दिनसाध्य इति प्रागुक्त । यच्च हारीतः " स्थावरसरीसृपादिवधे 'यस्येद प्राणमि'त्येतयाऽर्घ्यं हुत्वा तिलपात्र ब्राह्मणाय दद्यादिति " तदश्व थादिपुण्यवृक्षविषयमिति केचित् । युक्त तु चैत्यश्मशानादिस्थलजवृक्षाणा कामत छेदनविषयत्व । तत्र दण्डद्वैगुण्यादिदर्शनात् । यथाह याज्ञवल्क्यः ( व्य २२८-२२९ )

" चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये । जातद्रुमाणा द्विगुणो दमो वृक्षेऽथ विश्रुते ॥
" गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधा । पूर्वस्मृतादर्धदड स्थानेषूक्तेषु कर्तने " ॥ इति । गुल्मा मालत्यादय । गुच्छा कुरटकादय । क्षुपा करवीराढय । लता द्राक्षाद्या । प्रताना सारिवाद्या । ओषध्य शाल्याद्या । वीरुधो गुडूच्याद्या इति विज्ञानेश्वरः । 'यस्येदमिति' मनस्तु तैत्तिरीये " यस्येद प्राण निमिषद्यदेजति यस्य जात जनमान च केवल । स्तौम्यग्नि नाथितो जोहवीमि स नो मुचत्व९हस" इति । यत्तु " संवत्सर व्रत कुर्याच्छित्वा वृक्ष फलप्रदमिति " शखोक्त तन्महाफलप्रदनारिकेलादिवृक्षाणा कामत छेदनात्यताभ्यासविषय । वृक्षमित्येकवचन त्वनुवाद्यविशेषणत्वादविवक्षित । यत्तु विष्णुपुराणे
'भिनत्ति वीरुधो यस्तु वीरत्सन्धे निशाकरे । पत्र वा शातयत्येक ब्रह्महत्या स विंदतीति"॥ तदर्थवादमात्र । शूलपाणिरप्येवमेव । इति द्रुमच्छेदे ।

व्यसनेषु बौधायनः "अनृतवाक्तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदोऽश्व रथगजारोहणवृत्ती रगोपजीवी श्वागणिक शूद्रोपाध्यायो वृषलीपतिर्माहिको नक्षत्रोपजीवी श्ववृत्तिर्ब्रह्मजीवी चिकित्सको देवलक पुरोहित कितवो मद्यप कूटकारकोऽपत्यविक्रयी मनुष्यविक्रेता वेति तानुद्धरेत्समेत्य न्यायतो ब्राह्मणव्यवस्थया सर्वद्रव्यत्यागेन चतुर्थ कालाहारा सवत्सर त्रिषवणमनुतिष्ठेयुस्तस्याते देवपितृतर्पण गवाह्निके चेत्येव व्यवहार्या" इति तदमत्याभ्यासे । श्वागणिको य श्वगणेन जीवति श्वगणाढ्यो वेति दन् । माडिकस्तूर्यादिस्वनै राज्ञ प्रबोधयिता । श्ववृत्ति सेवक । ब्रह्मजीवी मूल्येन वैदिककार्यकर्ता ।

१ घ-ता, य-त । २ ज्ञ-मे ।

गवाह्निक गोवधप्रायश्चित्तमुक्तं । यदपि बौधायनः " अथाशुचिकरणानि द्यूतमभिचारो-ऽनाहिताग्निरुञ्छवृत्तिः । समावृत्तस्य भैक्षचर्या तस्य च गुरुकुले वास ऊर्ध्वं चतुर्भ्यो मासेभ्यो यश्च तमध्यापयति नक्षत्रनिर्देशन चेति द्वादशमासान् द्वादशार्द्धमासान् द्वादशान् द्वादशाषडहान् द्वादशाह्यहान् त्र्यहमेकाह चेति घृते " सवत्सरमाह तदप्यत्यताभ्यास-
५ विषयमेव । यत्तु शूद्रसेवाया बौधायनः "समुद्रयान ब्राह्मणस्य न्यासापहरण सर्वापण्यैर्व्यव-हरण भूम्यनृत शूद्रसेवायाश्च शूद्रायामभिजायते । तदपत्य च भवति तेषां तु निर्देशश्चतुर्थ-कालमितभोजिन स्युरपोऽभ्युपेयु सवनानुकल्प स्थानासनाभ्या विहरत एते त्रिभिर्वर्षैरपहति पापमिति " तद्दहुकाल शूद्रसेवाविषयं । अथानाश्रमे हारीतः " अनाश्रमी सवत्सर प्राजापत्य कृच्छ्र चरित्वाश्रममुपेयात् । द्वितीयेऽतिकृच्छ्रस्तृतीये कृच्छ्रातिकृच्छ्र अत
१० ऊर्ध्वं चान्द्रायणमिति " ।

इति याज्ञवल्क्योक्तोपपातकप्रायश्चित्तानि ॥

अथ मनूक्तोपपातकप्रायश्चित्तानि । तत्राभिचारे मनुः ( ११।१९७ )

" व्रात्याना याजन कृत्वा परेषामन्त्यकर्म च । अभिचारमहीन च त्रिभि कृच्छ्रैर्विशुद्धयति " ॥

अहीनो द्विरात्रादि । अहीनो धार्मिकस्तद्विषयमभिचारमिति समानाधिकरण्यमिति शूलपाणिः ।
१५ केचित्त्वेतद्वाक्योक्तकर्म याजन एवैतत्प्रायश्चित्त न तु यजन इत्याहु । त्रिभि कृच्छ्रै प्राजापत्यसातपनादि कृच्छ्रैरित्यर्थ । एतच्च सकृत्करणे । अत्राभ्यासे मूलकर्मणि च साधारणप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया योज्यानि ।

अथासत्प्रतिग्रहे । तत्र दुष्टप्रतिग्रहनिषेधा । मनुः

" असत्प्रतिग्रहात्तारस्तथैवायाज्ययाजना । नक्षत्रैर्जीवति यश्च सोऽधकार प्रपद्यते " ॥
२० मात्स्ये "तस्मात्तीर्थे न गृह्णीयात्तीर्थेष्वायतनेषु च । निमित्तेषु च सर्वेषु न प्रमत्तो भवेद्द्विजः" ॥

मनुः " हिरण्य भूमिमश्व गामन्न वासस्तिलान् घृत । अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवत् ' ॥

अत्र मन्त्राद्यविदुष एतत्प्रतिग्रहो निषिध्यत । न तु हिरण्यादीना कृष्णाजिनादिवदप्रतिग्राह्यत्व ।

स्कान्दे " अजिन मृतशय्या च मेषी नोभयतोमुखीं । कुरुक्षेत्रे च गृह्णानो न भूय पुरुषो भवेत्" ।

पाद्मे " महादानानि ये विप्रा गृह्णन्ति ज्ञानदुर्बला । कृशान्ते द्विजरूपेण जायंते ब्रह्मराक्षसा " ॥
२५ अय च निषेध एकस्यैव नानेकेषा । तथा च वह्निपुराणे " महादानमिद यस्मात्तस्मादेको हि नार्हति " । वसिष्ठः ( १३।११ ) " शस्त्र विष वा प्रतिग्राह्याणि ब्राह्मणस्य " । पाद्मे

" ब्रह्माडं भूमिदान च ग्राह्य नैकेन तद्भवेत् । गृह्णन् दोषमवाप्नोति ब्रह्महत्या न सशय " ॥

भूमिदान षोडशमहादानान्तर्गतरत्नधेनुमेदिनीदानमिति । धर्मप्रदीपे हेमाद्रौ

" ब्राह्मण प्रतिगृह्णीयाद्वृत्यर्थं साधुत सदा । अस्त्र च मणिमातगतिलल्लोहानि वर्जयेत् ॥
३० " कृष्णाजिनतिलग्राही न भूय पुरुषो भवेत् । शय्यालंकारवस्त्राणि प्रतिगृह्य मृतस्य च ॥

" नरकाच्च निवर्त्तेत धेनु तिलमयीं द्विज ॥
" कुरुक्षेत्रे च यद्दान चडालात्पतितात्तथा । मासिके च नवश्राद्धे भुजन्प्रेतत्वमाप्नुयात् " ॥
हेमाद्रौ स्मृत्यतरे
" कृष्णाजिनप्रतिग्राही विक्रयी चैव रेतस । गजच्छायाश्रितो भुक्त्वा न भूय पुरुषो भवेत् " ॥
पाद्मे " न तीर्थे प्रतिगृह्णीयात्प्राणे कंठगतैरपि । अपि कामातुरो जतुरेका रक्षति मातर ॥ ५
"तीर्थे प्रतिग्रही यस्तु तीर्थविक्रय एव स । विक्रीताया तु गगाया विक्रीत स्याज्जनार्दन ॥
"जनार्दने तु विक्रीते विक्रीत भुवनत्रय ।
" यस्तु लौल्याद्द्विज क्षेत्रे प्रतिग्रहरुचिर्भवेत् । नैव तस्य परो लोको नाय लोको दुरात्मन " ॥
ब्राह्मे
" प्रवाहमवधि कृत्वा यावद्धस्तचतुष्टय । तत्र नारायण स्वामी नान्य स्वामी कदाचन ॥ १०
" तत्र न प्रतिगृह्णीयात्प्राणे कठगतैरपि " । दानधर्मे
" भाद्रशुक्लचतुर्दश्या यावदाक्रमते जल । तावद्गर्भ विजानीयात्तदूर्ध्व तीरमुच्यते " ।
ब्राह्मे " सार्द्धहस्तशत यावद्गर्भतस्तीरमुच्यते "। स्कांदे
" तीराद्गव्यूतिमात्र तु परत क्षेत्रमुच्यते । अन्नदान जपो होमो गगाया नात्र सशय " ॥
तटयो प्रत्येक क्रोशद्वय । गव्यूतिमात्र गगाया क्षेत्रमन्यत्र नद्यादावनुक्तेर्नेति धर्मप्रकाशे । १५
याज्ञवल्क्यः ( आ २०२ )
" विद्यातपोभ्या हीनेन न तु ग्राह्यः प्रतिग्रह । गृह्णन्प्रदातारमधो नयत्यात्मानमेव चेति " ॥
एते च निषेधा अनेकविधा कालदेशद्रव्यकर्तृदात्रादिभेदात् । तत्र कालत उपरागादौ
देशत कुरुक्षेत्रादौ । द्रव्यतो मेष्यादि । कर्तृतस्तु विद्यातपोहीनस्य । दातृतस्तु द्वेधा जातित
कर्मतश्च । यथा चडालादे पतितादेश्च । २०
प्रायश्चित्तमाह योगीश्वरः( प्रा २९० )
" गोष्ठे वसन्ब्रह्मचारी मासमेक पयोव्रत । गायत्रीजप्यनिरत शुद्ध्यतेऽसत्प्रतिग्रहात् " ॥
मनुरपि ( ११।१९४ )
"जपित्वा त्रीणि सावित्र्या सहस्राणि समाहित । मास गोष्ठे पय पीत्वा मुच्यतेऽसत्प्रतिग्रहात् "॥
मासमित्यत्यतसयोगवाचिन्या द्वितीयया त्रिसहस्रजपस्य प्रतिदिन व्याप्तित्व गम्यते । इद च २५
गुरुत्वान्निमित्तद्वयसमुच्चय । यत्तु षट्त्रिंशन्मते
" पवित्रेष्ट्या विशुद्ध्यति सर्वे घोरप्रतिग्रहाः । ऐंदवेन मृगारेष्ट्या कदाचिन्मित्रविंदया ॥
" देव्या लक्षजपेनैव शुद्ध्यते दुष्प्रतिग्रहा " इति तद्देशकालकर्तृद्रव्याणामन्यतरदुष्टत्वे ज्ञेय।
अनयैव दिशा त्रितुःसन्निपाते प्रायश्चित्तगौरव कल्प्य पूर्वोक्तगायत्रीलक्षजपो वेति केचित् ।
षट्त्रिंशन्मतेऽपि " भिक्षामात्रे गृहीते तु पुण्य मत्रमुदीरयेत् " । ३०

१ घ-मनुष्याद ङ-मध्यादि ।

हारीतः " मणिवासो गवां सोमगवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् । पंच मध्यमे । दशोत्तमे । द्वादशरात्रं पयोव्रतं शतसहस्रमसत्प्रतिग्रहेष्विति " । उत्तमत्वादिकं च मण्यादीनां मूल्यतो वचनाच । तत्र वचनानि । नारदः ( १४।१९ ) " देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमं " । छांदोग्ये " त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वतीति " । देवलः

५ " नवोत्तमानि चत्वारि मध्यमानि विधानतः । अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥
" अन्नं दधि मधु त्राणं गोभूरुक्माश्वहस्तिनः । दानान्युत्तमदानानि उत्तमद्रव्यदानत ॥
विद्याच्छादन वास परिभोगोपधानकं । यानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
" उपानत्प्रेंखदानानि छत्रयानासनानि च । दीपकाष्ठफलादीनि चमरं बहुवार्षिकं ॥
" बहुत्वादर्थजातानां संख्या देशेषु नेष्यते । अधमान्यवशिष्टानि सर्वदानान्यनेकशः " । इति

१० अदेशेषु गणनातु संख्या इयत्ता परिच्छेद इति यावत् । नारद. ( १४।१९ )
"वास कौशेयवर्जं च गोवर्जं पशवस्तथा । हिरण्यवर्जं लोह च मध्यं व्रीहियवा अपि" ॥
देवलः "रत्नक्षेत्रवेदमहेमरूप्याभरणान्युत्तमानि चतुष्पदद्विपदधान्यफलोदकवस्त्रकार्पासादीनि मध्यमानि" । स्मृत्यर्थसारे " सर्वत्रानुक्तौ दातृदेशकालद्रव्येष्वदुष्टेषु द्वादशनिष्कप्रमाणद्रव्य-प्रतिग्रहे कार्यं । एवं सर्वत्र द्रव्यानुसारात् प्रायश्चित्तवृद्धिह्रासाविति " । श्राद्धहेमाद्रौ पाद्मे

१५ " अतिदुष्टा प्रेतशय्या न ग्राह्या द्विजसत्तमैः । गृहीतायां तु तस्यां च पुन संस्कारमर्हति" ॥
एतानि च प्रायश्चित्तानि प्रतिगृहीतद्रव्यमुत्सृज्यैव कार्याणि । तथा च मनुः ( ११।१९२ )
" यद्गर्हितेनार्जयंति कर्मणा ब्राह्मणा धनं । तस्योत्सर्गेण शुध्यंति जप्येन तपसैव वा " ॥
इद तु देशकालाद्यपेक्षया निषेधसत्वे । एकतरनिषेधसत्वे तूत्सर्गप्रायश्चित्तयोर्विकल्प । तथा च कल्पतरौ यमः

२० " कर्मणा गर्हितेनैव यद्वित्तं समुपार्जितं । तस्य त्यागेन शुद्ध्यंति धर्मस्यान्वेषणेन वा " ॥
उत्सर्गप्रकारमाह स एव
" अप्सु प्रास्येत्तु तद्द्रव्यमन्यायेन यदागत । प्रतिग्रही वा दातव्य शिष्टाय ब्रह्मचारिणा" ॥
यत्तु चतुर्विंशन्मते
" प्रतिग्रहेषु सर्वेषु पदार्थं परिकल्पयेत् । जपहोमादिकं कुर्यात्कृत्वा यन्नप्रतिग्रहं " ॥

२५ यच्च पाद्मे
" अथ चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिकर्शित । दशांशमर्थिने दद्यादेव तत्र न हीयते " ॥ इति
तत् क्षुद्रद्रव्यप्रतिग्रहविषयं । उपपातकसामान्यप्रायश्चित्तान्यपि जातिशक्त्याद्यपेक्षया योज्यानि ।
इति दुष्टप्रतिग्रहप्रायश्चित्तं । अथ कौशीलव्ये । तत्र यमः

१ घघर–विद्यो ।

" नटनर्त्तकतक्षाणश्चर्मकार सुवर्णकृत् । स्थाणुक पंटगणिका अभोज्यान्ना प्रकीर्त्तिता ॥
" गाधर्वो लोहकारश्च सौचिकस्तन्तुवायक । चक्रोपजीवी रजक कितवस्तस्करस्तथा ॥
" ध्वजी मालोपजीवी च शूद्राध्यापकयाजकौ । कुलालश्चित्रकर्मा च वार्धुषिश्चर्मविक्रयी ॥
" समर्घ पण्यमाहृत्य महर्घ य प्रयच्छति । म वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥
" वृथाश्रमी वृथादाता आश्रमाणा च भेदक । पुण्यस्य विक्रयी यश्च योनिसंकरकस्तथा ॥ ५
" रगोपजीवी कुडाशी वीरहा गुरुतल्पग । भिषक् च गरदश्चैव रूपाजीवी च सूचक ॥
" सौनिक पार्थिकश्चैव निषादेन समा स्मृता ।
" कर्मस्वेतेषु यो मोहाद्ब्राह्मणो वर्त्तते सदा । प्रायश्चित्तेऽपि चरिते परिहार्यो भवेत्स हि ॥
" एते ब्राह्मणचाडाला सर्वे ब्रह्महण किल । तस्माद्दैवे च पैत्र्ये च वर्जितास्तत्त्वदर्शिभि ॥
" एतेषामेव सर्वेषा प्रत्यापत्ति तु मार्गता । भैक्षान्नमुपयुञ्जानो द्विजश्चान्द्रायण चरेत् " ॥ १०

स्थाणुक अभ्रातृती इति **मदनः** । वृथाश्रमी वेदबाह्यजटाधारणादिना । आश्रमाणा तु भेदक तद्विरुद्धकारित्वात् । आश्रमधर्महिंसक इति **कल्पतरौ** । योनिसकरिक व्यभिचारी । कुडाशी चतु पष्टिपरान्नभक्षक इति **शूलपाणिः** । युक्तस्तु
" पत्यौ जीवति कुंडस्तु मृते भर्तरि गोलक । यस्तयोरन्नमश्नाति स कुडाश्युच्यते बुधैरिति" ॥
**मनूक्त** (३।१७४) एव । वीरहाऽग्नित्यागी । गुरुतल्पगोऽदडादिना गुरो शास्तेति प्राच्या । १५
गुरुनिन्हवकारीति **मदनः** । रूपाजीवी वेशकर । ताम्रादीना स्वर्णादिसदृशरूपकारी वा । सूचक पिशुन । सूना घातस्थान तेन जीवत्यसौ सौनिक । अत्रापि कौशील्यार्जितधनत्याग । अथ विष्णुद्विष्टेषु । **विष्णुः** ( ५४।१४ ) " समुत्कर्षानृते गुरोश्चालीकनिर्बंधे तदाक्षारणे च मास पयसा वर्तेतेति "। इद च मतिपूर्व । आक्षारण यभिचाराभिशाप । शाखोऽपि
" क्षिप्त्वा प्रावशुचिद्रव्य तदेवाभसि मानव । मासमेकं व्रत कुर्याद्गुपाकस्य तथा गुरु " ॥ २०
अस्मिन्नेव विषये **सुमंतुः** " देवर्षिब्राह्मणाचार्यपितृमातृनरेंद्राणा प्रतिघ्नेवने आक्रोशने चोल्मुकेन जिह्वा दहेद्धिरण्य दद्यात् " । अमतिपूर्व गुरोर्निबंधे तु वसिष्ठ ( २१।२८ ) " गुरोरलीकनिर्बंधे कृच्छ्र द्वादशरात्र चरित्वा सचैलस्नातो गुरुप्रसादात्पूतो भवति "। **याज्ञवल्क्यः** ( प्रा २९२ )
"गुरु त्व कृत्य हुकृत्य विप्र निर्जित्य वादत । बध्वा वा वाससा क्षिप्र स्नात्वा चोपवसेद्दिन" ॥ २५
**बृहस्पतिना** तूत्तरार्द्ध "ताडयित्वा तृणेनापि प्रसाद्येत विशुद्धयतीति" पठित । इदमकामत । कामतस्तु **शंखलिखितौ** " आक्रोशानृतवादे एकरात्र त्रिरात्र चोपवास " इति । यत्तु **वसिष्ठः** ' आचार्यमातृपितृहतारस्तत्समाद्रपापा " इति तदप्यज्ञानत हतारोऽल्पतरदु खकरा । **यत्त्वापस्तंबः** ' अनात्रेयमात्रेयद्य निरान्नक्षारलवणभोजन शूद्रस्य समरान्नभोजन स्त्रीणा च " तदपि ज्ञानन । ३०

---

१ घ-मौ । २ घ-च ।

अत्रानुक्तविशेषप्रायश्चित्तेषु वार्द्धुष्यलवणक्रियादिपूक्तविशेषप्रायश्चित्तेषु गोवधादिपूपपातकसामान्यप्रायश्चित्तानि जातिशक्त्याद्यपेक्षया योज्यानि। तत्रोत्तम मानव वृषभैकादशयुतत्रैमासिक। ततो न्यून द्वैमासिक। ततो न्यून मास यवागूपान। एतानि कामत। अकामतस्तु "उपपातकशुद्धि स्यादेव चान्द्रायणेन वा। पयसा वाऽपि मासेन पराकेणाथवा पुनरिति"

५ याज्ञवल्क्योक्तानि ( प्रा २६५ )। इत्युपपातकप्रायश्चित्तानि समाप्तानि।

अथ जातिभ्रंशकराण्याह मनुः ( ११।६७ )

"ब्राह्मणस्य रुज कृत्वा घ्रातिरघ्रेयमद्ययो। जैह्म्य पुंसि च मैथुन्य जातिभ्रंशकर स्मृतमिति"॥

विष्णुस्तु पशुमैथुनमपि पपाठ। तेषु प्रायश्चित्तमाह मनुः ( ११।१२४ )

"जातिभ्रंशकर कर्म कृत्वाऽन्यतममिच्छया। चरेत्सांतपन कृच्छ्र प्राजापत्यमनिच्छया"॥

१० एतच्चाभ्यास इति शूलपाणिः। सकरीकरणान्याह मनुः ( ११।६८ )

"खरा श्वोष्ट्रमृगेभानामजाविकवधस्तथा। सकरीकरण ज्ञेय मीनाहिमहिषस्य चेति"॥ विष्णुः (३९।१) 'ग्रामारण्यपशूना हिंसन सकरीकरणमिति"। अपात्रीकरणान्याह मनुः(११।६९)

"निन्दितेभ्यो धनादान वाणिज्यं शूद्रसेवन। अपात्रीकरण ज्ञेयमसत्यस्य च भाषणमिति"॥

उपपातकेषु शूद्रसेवानापदि। इह तु सत्यप्यापदि सेवनमिति भेद। एवमन्यत्र।

१५ मलिनीकरणान्याह मनुः ( ११।७० )

"कृमिकीटवयोहत्या मद्यानुगतभोजन। फलैध कुसुमस्तेयमधैर्यं च मलावहमिति"॥

विष्णुः ( ४१—१ ) "पक्षिणा जलजाना च घातन मलावहमिति"। अत्र जातिभ्रंशकरत्वादिसंज्ञा रूढा न यौगिका। अत्रैयाब्राह्मणेऽपि जातिभ्रंशापत्ते। क्षत्रियादीना पातित्याभावात्तान्प्रत्यपात्रीकरणसंज्ञाबाधाच्च। त्रिषु प्रायश्चित्तमाह मनुः ( ११।१२५ )

२० "संकरापात्रकृत्यासु मास शोधनमैन्दव। मलिनीकरणीयेषु तप्त स्याद्यावकं त्र्यहमिति"॥

विष्णुः ( ३९।२ )

"संकरीकरण कृत्वा मासमश्नीत यावक। कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्त तु कारयेत्"॥

अत्राज्ञानात्सकरीकरणानुष्ठाने मास यावकाशन। ज्ञानात्कृच्छ्रातिकृच्छ्र। अज्ञानाभ्यासे चान्द्रायण। ज्ञानाभ्यासे तु चान्द्रायणद्वय कल्प्य। विष्णुः ( ४०।१ )

२५ "अपात्रीकरण कृत्वा तप्तकृच्छ्रेण शुद्ध्यति। शीतकृच्छ्रेण वा भूयो महासांतपनेन वा"॥

अज्ञानादपात्रीकरणे तप्तकृच्छ्र वा ज्ञानात्तु महासांतपन। चान्द्रायण पूर्ववत्। विष्णुः ( ४१।५ )

"मलिनीकरणीय तु तप्तकृच्छ्र विशोधन। कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्त विशोधन"॥

अज्ञानान्मलिनीकरणानुष्ठाने त्र्यह यावक। ज्ञानात्तप्तकृच्छ्र। अज्ञानतोऽभ्यासे कृच्छ्रातिकृच्छ्र।

एतानि जातिभ्रंशकरादिषु सामान्यप्रायश्चित्तानि ब्राह्मणरुजकरणादिमध्ये यत्र

---

१ ई—रीकरण कृत्वा।

प्रातिस्विकं प्रायश्चित्तं नोक्तं यत्र तत्र चोक्तं तत्रापि जातिशक्तिगुणाद्यपेक्षया योज्यानि । विशेषवधप्रायश्चित्तमुक्तं प्राक् । इति जातिभ्रंशकरादिप्रायश्चित्तं ।

अथ प्रकीर्णकप्रायश्चित्तानि । तत्स्वरूपमुक्तं विष्णुना (४२।१) "यदनुक्तं तत्प्रकीर्णकमिति"। महापातकादिमलिनीकरणान्तेषु यन्न परिगणितं तत्प्रकीर्णकमित्यर्थः । मनुः ( ११।९७ ) " शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः । संवत्सरं यवाहारस्तत्पापमपसेधतीति " ॥ ५ वेदविप्लावनं । चाण्डालादिश्रुतिपथे अनध्यायेषु च पाठः । वसिष्ठः ( २३।३४ ) " पतित चण्डालशवश्रावणे त्रिरात्रं वाग्यता अनश्नंत आसीरन्सहस्रपरमं वा तदभ्यस्यन्त पूता भवतीति विज्ञायते " इति । शवश्रावणं शवसंनिधावध्ययनं । सहस्रपरममिति । यावान् भागश्चाण्डालादिभिः श्रुतस्तावन्तं भागं सहस्रकृत्वो जपेदित्यर्थः । यत्तु षट्त्रिंशन्मते " चण्डालश्रोत्रावकाशे श्रुतिस्मृतिपाठ एकरात्रमभोजनमिति " तदबुद्धिपूर्वे सकृच्छ्रवणे । १० नित्याकरणे सामान्यप्रायश्चित्तं मनुराह ( ११।२०३ )

" वेदोदितानां नित्यानां कर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनमिति "॥

नित्ययज्ञाद्यकरणे तु आचारमाधवीये प्रजापतिः

" दर्शं च पूर्णमासं च लुप्त्वाऽथोभयमेव वा । एकस्मिन् कृच्छ्रपादेन द्वयोरर्धेन शोधनं ॥

" हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः । प्राजापत्येन शुध्येत पाकसंस्थासु चैव हि ॥ १५

" सन्ध्योपासनहानौ तु नित्यस्नानं तु लोप्य च । होमं च नैत्यकं शुध्येद्गायत्र्यष्टसहस्रकृत् ॥

" समाप्ते सोमयज्ञानां हानौ चान्द्रायणं चरेत् । अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः ॥

" उपवासेन शुद्ध्येत पाकसंस्थासु चैव हीति " । कात्यायनः

" पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च । अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ॥

" भोजने पतितान्नस्य चरुर्वैश्वानरो भवेदिति " । विहितदक्षिणापर्याप्तद्रव्यालाभेऽपि नित्यं २० न लोपयेत् । तदाह बौधायनः

" यस्य नित्यानि लुप्तानि तथैवागन्तुकानि च । विधयापि न म सर्गं गच्छेत पतितो हि सः ।

" तस्मात्कन्दैः फलैर्मूलैर्मधुनाऽऽज्यरसेन वा । नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् "॥

पंचमहायज्ञाकरणे तु बृहस्पतिः

" अनिवर्त्त्य महायज्ञान्यो भुक्ते प्रत्यहं गृही । अनातुरः सति धने कृच्छ्रार्द्धेन स शुद्ध्यति"॥ २५

एतच्च त्रिदिनातिपाते इति केचित् । तथा

" आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि । ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत्"॥

विष्णुरपिः ( ५४।८ ) " पर्वानारोग्यवर्ज्जं ऋतावगच्छन्पत्नीं त्रिरात्रमुपवसेत् " ।

ऋतुरत्र स्नानदिनादारभ्य द्वादशदिनानि । यत्तु संवर्त्तः ३०

"ऋतौ नोपैति यो भार्यां नियता व्रतचारिणी । नियमातिक्रमात्तस्य प्राणायामशतं स्मृतमिति"॥
तदकामतः । एतच्च समानदेशविषयं
"ऋतुस्नाता तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पितृभिः सह मज्जतीति"॥
मिताक्षरावचनात् । एतदेव प्रायश्चित्तं स्त्रिया अपि ऋतौ भर्तुरनुपसर्पणे भवति । तस्या
५ अपि नारदीये दोषदर्शनात्
"आहूता या तु वै भर्त्रा नोपयाति स्वराश्विता । सा प्याशी जायते पुत्री दशवर्षाणि पञ्च चेति"।
तासु तु स्रीत्वादर्द्धं । हारीतः
"वहन्कमण्डलु रिक्तमश्नातोऽश्व श्वभोजनं । अहोरात्रेण शुद्धिः स्यादिनमन्येन चैव हि"॥
अत्र चकारेणोपवासदिनजपयो समुच्चय । ऋष्यशृंगः
१० "इन्द्रचापं पलाशाग्निं यद्यन्यस्य प्रदर्शयेत् । प्रायश्चित्तमहोरात्रं धनुर्दण्डश्च दक्षिणेति"॥
धनुषो दण्डस्य च क्रमेण दानं ज्ञातव्य । अंगिराः
"अनापदि चरेद्यस्तु भिक्षां भिक्षा गृहे वसन् । दशरात्रं पिबेद्ब्रह्मपतराले च द्विजः"॥ इति ।
वज्र वज्रकृच्छ्रस्वधि द्रव्य । एतस्या पत्नी विषमस्थाने तु यमः
"न पत्न्या विषमं दद्यान्न याचेत न दापयेत् । याचको दापको दाता न वै स्वर्गस्य गामिनः ॥
१५ "प्राजापत्येन कृच्छ्रेण मुच्यन्ते कर्मणस्ततः"॥ स एव
"नदीसंक्रमहन्तुश्च कन्याविघ्नकरस्य च । समे विषमकर्तुश्च निष्कृतिर्नोपपद्यते ॥
"त्रयाणामपि चैतेषां प्रत्यापत्तिः तु मार्गता । भैक्षलब्धेन चान्नेन द्विजश्चान्द्रायणं चरेत्"॥
संक्रम उत्कावतरणमार्गः । समे विषमकर्ता पूजार्हौ । अत्रः
"एकपात्त्युपविष्टानां विषमं यः प्रयच्छति । यश्च पाचत्यसौ पक्षं कुर्याद्ब्रह्महणि व्रतं"॥
२० वसिष्ठः ( १९।४०–४३ ) 'दण्डोत्सर्गे राजैकरात्रमुपवसेत्पुरोहितः । कृच्छ्रमदण्ड्य
दण्डने पुरोहितस्त्रिरात्र । कुनखी श्यावदन्तश्च कृच्छ्रं चरित्वोद्धरेयातामिति" ( २०–६ ) ।
उद्धरेयाता कुत्सितानां दन्तानां नखानां चोद्धरण कुर्यातामित्यर्थ । ब्राह्मणस्य क्षत्रियाद्यभिवादने
हारीतः "क्षत्रियाद्यभिवादनेऽहोरात्रमुपवसेद्वैश्यस्य शूद्रस्याभिवादने त्रिरात्रमुपवास इति"।
समित्पुष्पहस्ताभिवादनेऽप्येवमिति केचित् । तथा शय्यारूढपादुकोपानदारोपितपादोच्छिष्टा
२५ कारस्थश्राद्धकृज्जपदेवपूजाभिरताभिवादने त्रिरात्रमुपवास स्यादन्यत्र निमन्त्रितेनान्यत्र
भोजनेऽपि त्रिरात्रमिति" । देवादीनामाभिमुख्येन ष्ठीवनादौ सुमन्तु "स्त्वग्निगोब्राह्मणार्कमातृ
पितृनरेंद्राणां प्रतिष्ठीवन आक्रोशने जिह्वा दहेद्धिरण्य दद्यादिति"। प्रतिष्ठीवनमाभिमुख्येन ष्ठीवनं ।
अथ मठपोद्यानादिदेवतागारादिभेदने । कश्यपः "वापीकूपारामसेतुस्तातडागवप्रदेवता
यतनभेदने प्रायश्चित्तं । ब्राह्मणेभ्यो निवेद्य चतस्र आज्याहुतीर्जुहुयादिदं विष्णुरिति
३० प्रथमा मा नस्तोक इति द्वितीया । विष्णोः कर्माणीति तृतीया पादोऽस्यात्यामिति

चतुर्थी' या देवतामुच्छेदयति तस्यै देवतायै ब्राह्मणान् भोजयेदिति"। एतच्चाल्पोपघाते। महतोपघातेऽभ्यासे प्राजापत्यादि कल्पनीयम्। देवता चात्र मृन्मयी पूजोज्झिता च ग्राह्या। प्रायश्चित्तस्याल्पत्वादन्यत्र तु दंडगौरवदर्शनेन प्रायश्चित्तगौरवं कल्प्यं। दंडवत्प्रायश्चित्तानि भवंतीति वचनात्। तथाऽत्र दंडगौरवमाह **कात्यायनः**

"हरेच्छिंद्याद्दहेद्वाऽपि देवानां प्रतिमां यदि। तद्गृहं चैव यो भिंद्यात्प्राप्नुयात्पूर्वसाहसं"॥ ५

**विष्णुरपि**(५।१९) "अभक्ष्यस्याविक्रेयस्य विक्रयी प्रतिमाभेदकश्च उत्तमसाहसं दंडनीयः"। अत्र भग्नोद्धारादिकमप्याहतुः **शंखलिखितौ** "प्रतिमारामकूपसंक्रमणध्वजसेतुनिपातभंगेषु तत्समुत्थापनं प्रतिसंस्कारोऽष्टशतं चेति"। **मनुः** (९।२८५)

"संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः। प्रतिकुर्याच्च तत्सर्वमवदद्याच्छतानि चेति"॥

अत्र च प्रतिमातद्भेदतारतम्येन दंडप्रायश्चित्तयोर्व्यवस्थोन्नेया। पत्न्या दारिद्र्यादिना १० भर्तुरतिक्रमे **आपस्तंबः** "भर्तुरतिक्रमे कृच्छ्रं' इति। अतिक्रमो दारिद्र्यक्रोधमात्सर्यादिनाऽवमाननं। **पर्वणि मैथुने**। **विष्णुपुराणे** निन्दाश्रवणं

"चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा। पर्वाण्येतानि राजेंद्र रविसंक्रांतिरेव च॥

स्त्रीतैलमांससंभोगी पर्वस्वेतेषु यो नरः। विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः"

**मिताक्षरायां स्मृत्यंतरे** १५

"अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनं। कृत्वा सचैलं स्नात्वा च वारुणीभिश्च मार्जयेदिति"॥

श्राद्धदिनमैथुने च। स्नातकव्रतलोपे वेत्यनेनोपवास एव। **वमने शातातपः**

"विच्छर्दने द्विजातीनां भिन्नभांडे च भोजने। पंचगव्येन शुद्धिः स्यादिति शातातपोऽब्रवीत्"॥

माषादिवमने तु विशेषमाह **यमः**

"मसूरमाषमांसानि भुक्त्वा वा वमति द्विजः। त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते॥ २०

प्राणायामैस्त्रिभिः स्नात्वा घृतं प्राश्य विशुध्यति"। तथा यज्ञोपवीतादिनाशे "मेखलादंडाजिनयज्ञोपवीतानां पातेषु च मनोव्रतवतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनर्यथार्थं प्रतीयादसकृद्देवसभोजनेऽभ्युदितेऽभिनिर्मुक्ते वांते दिवास्वप्ने नग्नस्त्रीदर्शने नग्नस्वापे श्मशानमाक्रम्य हयादींश्चारुह्य पूज्यातिक्रमे चैताभिरेव जुहुयादभ्यसमिंधने स्थावरसरीसृपादीनां वधे यद्देवा देवहेलनमिति कूष्मांडीभिराज्यं जुहुयान्मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्ट २५ सहस्रं जपेदिति"। 'मनो ज्योतिर्जुषतामिति' मनोलिंगाभिः। 'त्वमग्ने व्रतपा असीति' व्रतलिंगाभिश्च। यथार्थं उपनयनोक्तेन विधिना। समंत्रकं प्रतीयाद् गृह्णीयात्।

अभ्युदितादिस्वरूपमाह **यमः**

"सूर्योदये तु यः शेते स सूर्योदित उच्यते। अस्तगते तु यः शेते सूर्ये निर्मुक्त एव सः"॥इति॥

अकामतोऽभ्युदिते प्रायश्चित्तमाह **यमः** ३०

" अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि भोजने । दु स्वप्ने दुर्जनस्पर्शे स्नानमात्र विधीयते" ॥
अत्रैवाशक्ततो **गौतमः** ( २३।२१ ) " सूर्योऽभ्युदितो[1] ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमिते
रात्रिं सावित्रीं जपेत् " । अभ्यासे त्वावृत्तिरूह्या ।
गर्भाधानादिसंस्कारातिपत्तौ तु **आश्वलायनः**

१ " आरभ्याधानमा चैलात्कालेऽतीते तु कर्मणाम् । व्याहृत्याज्य सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥
" एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् । चूडाया अर्द्धकृच्छ्र स्यादापदि त्वेवमीरित ॥
" अनापदि तु सर्वत्र द्विगुण द्विगुण चरेत् " ॥ **कात्यायनोऽपि**
" लुप्ते कर्मणि सर्वत्र प्रायश्चित्त विधीयते । प्रायश्चित्ते कृते पश्चाल्लुप्त कर्म समाचरेत् ॥
" त्व न स त्व न इत्याभ्या इम मे त्वितया ऋचा । ये ते शतमयाश्चाभ्यामुदुत्तममृचाहुती ॥

१० " हुत्वा पृथक् पृथक् पादमर्द्धं चौले समाचरेत् । स्त्रीणामप्येवमेव स्याज्जातादावमितिः त्रियेति" ॥
गर्भाधानाकरण एवाश्वलायनः
" गर्भाधानस्याकरण तस्या जातस्तु दुष्यति । अकृत्वा गा ततो दत्त्वा कुर्यात्पुसवन पतिरिति" ॥
क्षुताद्यै **वृद्धपराशरः**
" विप्र क्षुत्कृत्य निष्ठीव्य कृत्वा चानृतभाषण । वचन पतितै कृत्वा दक्षिण श्रवण स्पृशेत् ॥

१५ " प्रेक्षण शशिनोऽर्कस्य ब्रह्मेशविष्णुसंस्मृति " । एतच्च जलाभावे कर्मणि व्यापृतौ वा । अत
एव **वृद्धशातातपः**
" क्षुत्वा निष्ठीव्य वासस्तु परिधायाचमेद्बुध । कुर्यादाचमन स्पर्श गोपृष्ठस्य च दर्शन ॥
" यथाविभवतो ह्येतत्पूर्वाभावे तत परः । अविद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते " ॥ इति ।
सवत्सर क्रियातिपाते **विष्णुपुराणं**

२० " सवत्सर क्रियाहानिर्यस्य पुस प्रजायते । तस्यावलोकनात्सूर्यो निरीक्ष्य साधुभि सदा ॥
" स्पृष्टे स्नान सचैल तु शुद्धिहेतुर्महामते । पुसो भवति तस्योक्ता न शुद्धि पापकर्मण" ॥ इति ।
अत्र च प्रायश्चित्तविशेषाश्रवणाद्दशाहातिक्रमे चैकाहमभोजनस्योक्तत्वात्तदनुसारेण च षष्ट्यधिक-
शतत्रयादिनाचारे तावदुपवासकरणाशक्तेस्तत्प्रत्याम्नायत्वेन षडुपवासैरेकैकप्राजापत्य-
कल्पनया निवत्यर्धशतप्राजापत्या उपवासद्वय च योज्य । नियमेन गृहीत्वा त्यागे तु **यमः**

२५ " वेतन वारयित्वा तु योऽतिपातयति द्विज । ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥
" एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतव्रत । यतिचान्द्रायणचीर्त्वा तत पापात्प्रमुच्यते" ॥ इति ।
निमन्त्रितस्यानाह्वानेऽप्येतदेव । एतच्च कामाभ्यासे । अन्यत्र भोजने तु **हारीतः**
" अन्यत्र निमन्त्रितेनान्यत्र भोजनेऽपि त्रिरात्रमिति " । अनृतवचनादौ तु **शंखलिखितौ**

---

१ ई–सूर्ये घयर–सूर्यो । २ घई–ते । ३ घयर–यदुक्त । ४ ब–चसमाचरेत्, ई–त्रिगुण चरेत् ।
५ घ–कालाद्या ।

" आक्रोशनानृतवादे एकरात्र चोपवास " इ । कामतोऽभ्यासे तु " असत्यभाषण शूद्र सेवनमपात्रीकरण कृत्वा तप्तकृच्छ्रेण शुद्ध्यतीति " ( ४०।२ ) विष्णूक्तं ज्ञेय । वधफलकेऽनृते तु व्यसनप्रायश्चित्तप्रसंगेनोपपातकेषु प्रागुक्त । निषिद्धदेशगमने देवलः

"सिंधुसौराष्ट्रसौवीरास्तथा प्रत्यतवासिन । अगवगकलिंगाश्च गत्वा सस्कारमर्हति" ॥

कर्मनाशाजलस्पर्शादौ स एव ५

" कर्मनाशाजलस्पर्शात्करतोयाविलंघनात् । गडकीबाहुतरणात्पुन सस्कारमर्हतीति " ॥

तीर्थयात्रा विना चैतत्

" अगवंगकलिंगाश्च सौराष्ट्रमगधानपि । तीर्थयात्रा विना गच्छेत्पुन सस्कारमर्हतीति "॥

स्मरणात् । तद्देशवासिना तु प्रायश्चित्ततारतम्य कल्पनीय । व्रणमध्ये कृमिपाते गरुडपुराणे १०

" जायते यस्य शिरसि कृमयो विनतात्मज । कृच्छ्र तदाचरेत्प्राज्ञ शुद्धये कश्यपात्मजेति" । यत्तु च्यवनः " कृमिदर्शने सातपन वृषभो दक्षिणेति " । तद्बहुपलनेकव्रणेषु कृम्युत्पत्तौ ज्ञेय । अत्र क्षत्रियादीना पादपाद न्यून । खरयानाद्यारोहणे याज्ञवल्क्यः ( प्रा २९१ )

" प्राणायामी जले स्नात्वा खरयानोष्ट्रयानग । सवासा जलमाप्लुत्य प्राणायामेन शुध्यति"॥

इति मनुबृहस्पतिस्मरणात्कामकारविषय । अकामतस्तु स्नानमात्र । अत्रैव विष्णुः (५४।२३) १५

" उष्ट्रेण खरेण वा ग वा नग्न स्नात्वा च भुक्त्वा च प्राणायाम कुर्यादिति " । साक्षा त्खरोष्ट्राद्यारोहणे तु यमः

" खरयानमुष्ट्रयान वा योऽधिरोहेद्द्विजोत्तम । अपो वा प्रविशेन्नग्नस्त्रिरात्र क्षपण स्मृतमिति"॥

दिवामैथुनादौ तु प्रायश्चित्तमाह शंख

"दिवा तु मैथुन कृत्वा नग्न स्नात्वा तथाऽप्सु ति । नग्ना परस्त्रिय दृष्ट्वा दिनमेकमभोजनमिति"॥ २०

अत्र नग्नस्नानादावेकरात्रत्रिरात्रयोरभ्यासाद्यपेक्षया व्यवस्था द्रष्टव्या ।

अनुदकमूत्रपुरीषकरणे यममनू

" आपद्गतो विना तोय शारीर यो निषेवते । एकाह क्षपण कृत्वा सचैलं स्नानमाचरेदिति"॥

अनापदि द्विगुण । एतच्च कामत । अत्रैव सुमतुः " अनुदकमूत्रपुरीषकरणे नखकेशरुधिरप्राशने सद्य स्नान घृतकुशहिरण्योदकपान चेति " । अत्र घृतादिपानस्य २५ प्रायश्चित्तार्थत्वाद्भोजननिवृत्ति । यत्त्वंगिराः

"कृते मूत्रपुरीषे वा यदा नैवोदक भवेत् । स्नात्वा लब्धोदक पश्चात्सचैलस्तु विशुध्यतीति"॥

यच्च शातातपः " अनुदकमूत्रपुरीषकरणे सचैल स्नान महाव्याहृतिहोमश्चेति " । तदकामत । अत्रैव मनुः ( ११।२०२ )

---

१ ह्य–नद्य ।

विनाऽद्भिरप्सु चाप्यंतः शारीरं संनिषेव्य तु। सचैलो बहिराप्लुत्य गामालभ्य विशुद्ध्यतीति"॥
यत्तु स एव

"अटव्यामटमानस्य ब्राह्मणस्य विशेषतः। प्रणष्टसलिले देशे कथं शुद्धिर्विधीयते॥
"अपां दृष्ट्वैव विप्रस्तु कुर्याच्चैव सचैलकं। गायत्र्यष्टशतं जप्यं स्नानमेतत्समाचरेत्॥

९ "देशं कालं समासाद्य अवस्थामात्मनस्तथा। धर्मशौचेऽवतिष्ठेत न कुर्याद्वेगधारणं॥
"त्रिरात्रं चाप्युपवसेऽन्यहं त्रिषवणी भवेत्। तथैवांमासि मग्नस्तु त्रिःपठेदघमर्षणमिति"। धर्मशौचं स्नानीयशौचं। वेगधारणं शास्त्रीयशौचप्रतीक्षया मूत्रपुरीषोत्सर्गविलंबं न कुर्यादित्यर्थः।
त्रिरात्रोपवासस्त्वनापदि कामतः। अप्सु कामतो मूत्रपुरीषोत्सर्गयोरभ्यासे शंखलिखितौ
"रेतोमूत्रपुरीषाण्युदके कृत्वा त्रिरात्रोपोषित इदमापः प्रवहतेति जपेदिति"।

१० यत्तु सुमंतुः "अप्स्वशौ वा मेहतस्तप्तकृच्छ्रमिति" तत्कामतोऽत्यंताभ्यासे।
स्वपुरीषदर्शनादौ यमपराशरौ

"प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्। दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथेति"॥
यज्ञोपवीतं विना वांतिकमूत्रोत्सर्गादिकरणे तु मदनरत्ने स्मृत्यंतरं

"विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद्द्विजः। प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वेति"॥

११ ऊर्ध्वोच्छिष्टे उपवासः। अधरोच्छिष्टे गायत्र्यष्टशतजप इति व्यवस्था। यत्तु तत्रैव
"पिबतो मेहतश्चैव भुंजतोऽनुपवीतिनः। प्राणायामत्रिकं षट्कं नक्तं च त्रितयं क्रमादिति"॥
तदकामतः। यत्तु वृद्धपराशरः

"यज्ञोपवीतेन विना मोजनं कुरुते द्विजः। अथ मूत्रपुरीषे वा रेतःसेचनमेव वा॥
"त्रिरात्रोपोषितो विप्रः पादकृच्छ्रं तु भूमिपः। अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनीति"॥

२० तत्कामतोऽभ्यासे। भुक्तवतोऽनाचांतस्योत्थानेऽपि तत्रैव

"यदोत्तिष्ठत्यनाचांतो भुक्तवानासनात्ततः। सद्यः स्नानं प्रकुर्वीत सोऽन्यथाऽप्रयतो भवेदिति"॥
पलाशशयनाद्यारोहणे शंखः

"अध्यास्य शयनं यानमासनं पादुके तथा। पालाशस्य द्विजश्रेष्ठस्त्रिरात्रं तु व्रती भवेदिति"॥
निषिद्धकाष्ठेन दंतधावने वृद्धपराशरः

२५ "पालाशार्कशिंशपाकाष्ठदंतधावनकृन्नरः। दिवाकीर्तिसमस्तावद्यावद्गां नैव पश्यतीति"॥
एतच्च निषिद्धकाष्ठांतराणामप्युपलक्षणं। अंतरा गमनेऽपि तत्रैव

"द्वौ विप्रौ ब्राह्मणाग्नी च दंपती द्वौ द्विजोत्तमौ। अंतरेण यदा गच्छेत्कृच्छ्रं सांतपनं चरेत्॥
"होमकाले तथा दोहे[3] स्वाध्याये दारसंग्रहे। अंतरेण यदा गच्छेद्द्विजश्चांद्रायणं चरेत्"॥

---

१ ख-स्थित्वा। २ खङ-चैव, घयङ-चाव। ३ घ-दाहे।

यत्त्वंगिराः

" उपत्योर्विप्रयोरन्योर्निप्राम्योर्द्विजातिषु । अतर यदि गच्छेत्तु द्विजश्चान्द्रायण चरेदिति "॥

तत्कामत । एतदेव च

" विप्राम्योर्विप्रविडाना नगोष्णोर्विष्णुताक्ष्र्ययो । मानुर्योमादिकाना च न कुर्यादतरागतिमिति"॥

पराशरोक्तमपि द्रष्टव्य । वृद्धपराशरः ५

"पादप्रतापन कृत्वा कृत्वा वर्न्हि तथा ह्यध । कुशैः प्रमृज्य पादौ तु दिनमेक व्रत चरेत्" ॥

स्नातकव्रताधिकारे क्रतुः " एतेषामाचाराणामेकैकस्य व्यभिचारे एकरात्रोपोषणमिति " ।

ब्रह्मचारिधर्मलोपे बौधायनः " अत्रैव शौचाचमनसध्यावदनदर्भभिक्षाग्निकार्यराहित्यशूद्रादि-

स्पर्शनकोपीनकटिसूत्रयज्ञोपवीतमेखलादडाजिनत्यागदिवास्वापछत्रधारणपादुकाध्यारोहणमाला

धारणोद्वर्त्तनानुलेपनाजनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपारुष्यडाम्भिभाषणपर्युषितभोजनादि १०

ब्रह्मचारिव्रतलोपजसकलदोषनिर्हारार्थं ब्रह्मचारी कृच्छ्रत्रय चरेत् । महाव्याहृतिहोम च कुर्यात् ।

प्रथम व्यस्तसमस्ताभिर्व्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा " भूरग्नये च पृथिव्यै च महते

च स्वाहा । ॐभुवो वायवे चातरिक्षाय च महते च स्वाहा । ॐसुवरादित्याय च दिवे च

महते च स्वाहा । ॐभूर्भुवःसुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । ॐपाहि नो अग्न

एनसे स्वाहा । ॐपाहि नो अग्ने विश्ववेदसे स्वाहा । ॐ यज्ञ पाहि विभावसो स्वाहा । ॐ सर्वं १५

पाहि शतक्रतो स्वाहा । ॐपुनरूर्जा निवर्त्तस्व पुनरग्न इषायुषा । पुनर्न पाह्यहस स्वाहा ॥

सहरय्यानिवर्त्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परिस्वाहा । पुनर्व्याहृतिभि र्हुनेदिति"

हुनेज्जुहुयात् । एतदल्पधर्मलोपे । बाहुल्ये प्रायश्चित्तविशेषमाह ऋग्विधाने शौनकः

" त बोधिया जपेन्मत्रं लक्ष चैत्ये शिवालये । ब्रह्मचारिणो धर्म च शून्य चेत्पूर्णमेव हीति "॥

इति ब्रह्मचारिधर्मलोपप्रायश्चित्त । क्षत्रियस्य रणे पृष्ठदर्शने शंखः २०

" क्षत्रियस्य रणे पृष्ठ दत्वा प्राणपरायण । सवत्सर व्रत कुर्याच्छित्वा वृक्ष फलप्रद " ॥

एतच्च कामतोऽभ्यासे । अन्यत्र तु त्र्यहादि योज्य । गृहीतव्रतभंगे वायुपुराणे

" लोभान्मोहात्प्रमादाद्वा व्रतभगो यदा भवेत् । उपवासत्रय कुर्यात्कुर्याद्वा केशमुडन ॥

" प्रायश्चित्तमिद कृत्वा पुनरेव व्रती भवेत् " । वा शब्द समुच्चये । मिथ्याशपथे यमः

" त्रिरस्य वधसयुक्त कृत्वा तु शपथ मृषा । ब्रह्महा यावत्कालेन व्रत चान्द्रायण चरेत् " ॥ २१

एतच्च शपथा-तरस्याप्युपलक्षक

" सुकृत ये प्रयच्छति यावज्जीवकृत नरा । ते पिष्यन्ते शिलापेष्यैर्यैते पापकारिण " ॥

इति मार्कडेयपुराणवाक्यात् " यत्रोक्त यत्र वा नोक्तमि"त्यौशनसवाक्यात्तत्र

प्राजापत्य कल्पनीय । ब्राह्मणस्य क्षत्रियादिवृत्त्या धनार्जने प्रचेताः " ब्राह्मणस्यापत्काले

१ अवरयघयरिस्नाउ-ह्नदुयार । २ ह्य-अन कृत्वा, यर-पुष्णत ।

पितृमातृबहुभृत्यस्यानंतरं क्षत्रोपनिवेशः। तत्र संवत्सरमर्यप्राप्तौ चांद्रायणं चरेदिति"।
वैश्यवृत्तिजीवने तु किंचिदधिकं। तत्र वर्षाभ्यंतरे मासाद्विमासादौ चांद्रायणभोगहारः
कल्पनीयः। संवत्सरादूर्ध्वं द्वैगुण्यादि च कल्पनीयं। शूद्रवृत्त्याऽर्जने मनुः
"न कथंचन कुर्वीत ब्राह्मणः कर्म वार्षलं। वृषलःकर्म वाब्राह्मं पतनीये हि ते तयोः"॥
५ वार्षलं कर्म सेवा। एवमुपक्रम्य पुनरुपनयनसहितकृच्छ्रांद्यनुवृत्तौ स एव (११।१९२)
"प्रायश्चित्तं न कुर्वन्ति विकर्मस्थास्तु ये द्विजाः। ब्राह्मणास्तु परित्यक्तास्तेषामप्येतमादिशेत्"॥
एवं शूद्रस्यापि द्विजकर्मकरणेऽप्येतदेव। तस्यापि तद्विकर्मत्वात्। अर्जितधनत्यागपूर्वकं
चैतत्। "यद्गर्हितेनार्ज्जयंति" इति मनूक्तेः (११।१९३)। स्त्रीधनोपजीवने तु
"चांद्रायणेन चैकेन सर्वपापक्षयो भवेत्" इत्यापस्तंबोक्तं चान्द्रायणं स्त्रियै तद्धनं
१० दत्वा कार्यं। भार्याया मुखमैथुने तूशनाः "यस्तु पुनर्ब्राह्मणो धर्मपत्नीमुखे मैथुनं
सेवेत्स दुष्यतीति" वैवस्वतः "प्राजापत्येन शुध्यतीति" हारीत इति।
गोयुक्तयानस्थस्य मैथुने यमः
"यदि गोभिः समायुक्तं यानमारुह्य वै द्विजः। मैथुनं सेवते चैवं मनुः स्वायंभुवोऽब्रवीत्॥
"त्रिरात्रं क्षपणं कृत्वा सचैलं स्नानमाचरेत्। गोभ्यो यवाढकं दद्याद्घृतं प्राश्य विशुध्यतीति"॥
१५ यत्तु स्मरणं
"मैथुनं तु समासाद्य पुंसि योषिति वा द्विजः। गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्"॥
तदकामतः सकृत्करणे ज्ञेयं। क्रोधात्स्वभार्यां त्वं मे मात्रा सदृशी अगम्येत्युक्त्वा पुनरुपभोगे
प्रायश्चित्तमाह पराशरः (१२।५०)
"यस्तु क्रुद्धः पुमान् ब्रूयाज्जायायास्तु अगम्यतां। पुनरिच्छति भार्यां च विप्रमध्ये तु वाचयेत्॥
२० "आर्त्तः क्षुद्धस्तमोघो वा क्षुत्पिपासाभयार्दितः। दानं पुण्यमकृत्वा वा प्रायश्चित्तं दिनत्रयं॥
"उपस्पृशेत्त्रिषवणं महानद्युपसंगमं। चीर्णेते चैव गां दद्याद्ब्राह्मणान् भोजयेद्दशेति"॥
वाचयेत्स्वस्य प्रायश्चित्तोपदेशं कारयेत्। पुण्यं यागादि। संकल्पितं दानाद्यकृत्वेत्यर्थः।
बस्तिकर्मणि यमः
"बस्तिकर्मणि रूक्षैश्च प्रच्छर्दनविरेचनैः। शिशुकृच्छ्रेण शुद्ध्येत्तु तस्मात्पापान्न संशयः"॥
२५ प्रच्छर्दनविरेचनयोरभ्यास एव शिशुकृच्छ्रः। अन्यत्र तु स्नानमात्रं। तथा च स एव
"अजीर्णेऽभ्युदिते वांते श्मश्रुकर्मणि मैथुने। दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते"॥
इति। देवागारशिलादिना स्वगृहकरणं निंदति यमः
"इष्टकाकाष्ठपाषाणलोहान् देवालयसमन्वितान्। गृहीत्वाऽऽत्मगृहे ये तु लोभाद्वै योजयंति च॥
"एकाकिनस्तथोद्विग्नाः क्षुत्तृषापरिपीडिताः। बंधने ते तु तिष्ठंति यावत्पापस्य संक्षयः"॥

१ न–भार्ये। २ ख–कृच्छ्रत्रयं, ग–कृच्छ्रयनु–ल–चानु। ३ चिकीर्षेति। ४ ख–तत्र। ५ ब–चाश्रि।

अत्र प्राजापत्यचान्द्रायणादि कल्प्यं। वानप्रस्थयत्योर्व्रतभंगे " वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्द्धयेत्। भिक्षुर्वानप्रस्थवत्सोमवृद्धिवर्जं स्वशास्त्रसंस्कारश्चेति"। दीक्षाभेदो यमनियमातिक्रमः। महाकक्षमौषधवनप्रदेशः उदकसेवनादिना वर्द्धयेत्। सोमशब्देनौषधिसामान्यं लक्ष्यते। तद्वृद्धिं परं भिक्षोर्निवर्त्तते। परंतु सर्वं सममित्यर्थः। स्वशास्त्रसंस्कारः प्राणायामाभ्यासः। हारीतः " अनृतपिशुनवचने भिक्षूणां तप्तकृच्छ्रं ५ क्रोधाहंकारपिशुनेषु च "। छागलेयः

" व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च। एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते॥

" अहोरात्रोषितो भूत्वा कृच्छ्रं चान्द्रायणं चरेत् "। कृच्छ्रपदं चान्द्रायणविशेषणम्। व्रतोपव्रतान्याह बौधायनः। अथेमानि व्रतानि " अहिंसासत्यमस्तैन्यं मैथुनस्य च वर्जनं "। अथोपव्रतानि " अक्रोधो गुरुशुश्रूषाप्रसादः शौचमाहारशुद्धिश्चेति "। जले १० प्रतिबिंबदर्शनादौ याज्ञवल्क्यः ( प्रा २७९ )

"मयि तेज इति छायां स्वां दृष्ट्वाऽम्बुनि वै जपेत्। सावित्रीमशुचौ दृष्टे चापले चाऽनृतेऽपि च"।

'मयि तेज' इति मन्त्रो वाजसनीये प्रसिद्धः। अशुचौ मूत्रपुरीषादौ। चापले वृथाचेष्टायां। प्रतिश्रुत्यानृतोक्तौ हारीतः

" प्रतिश्रुत्यानृतं ब्रूयान्मिथ्यासत्यमथापि वा। स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतमिति "॥ १५

गुरुवस्तुविषयकप्रतिश्रुताकरणपरमेतत्। प्रायश्चित्तस्य गुरुत्वात्। भोजनकालीनमौनत्यागे पराशरः ( १२।३६ )

" मौनव्रतं समासाद्य आसीनो न वदेद्द्विजः। भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेदिति "॥

अर्द्धभुक्ताऽन्नपात्रेण जलपाने स एव

"अर्धभुक्ते तु यो विप्रस्तस्मिन्पात्रे जलं पिबेत्। हतं दैवं च पित्र्यं च आत्मानं चोपघातयेत्"॥ २०

पशुवन्मुखेन जलपाने स एव

" विद्यमानेषु हस्तेषु ब्राह्मणो ज्ञानदुर्बलः। तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवमिति "॥

अत्रोपवासः प्रायश्चित्तं। असपिंडैः सह रोदने पारस्करः

" मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनं। वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च" ॥

इत्यनेनैवाह। एतच्च कामतः। अकामतस्तु स्नानमेव। प्रेतालंकरणे शंखः २५

" कृच्छ्रपादोऽसपिंडस्य प्रेतालंकरणे कृते। अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यत"॥इति।

कामतो द्विगुणं। यत्तु तप्तकृच्छ्रानुवृत्तावंगिराः " आत्मत्यागिनां सत्कृतौ तदश्रुपातकारी चेति " तदभ्यासे। समानोत्कृष्टजातिप्रेतानुगमने मनुः ( ५।१०२ )

"अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च। स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुद्ध्यतीति"॥

अत्रेच्छयेति ग्रहणादेतत्कामतः। अकामतस्तु स्नानमेव। यत्तु याज्ञवल्क्यः ( प्रा. २६ ) ३०

---

१ न-वर्जयेत्।

"ब्राह्मणेनानुगंतव्यो न शूद्रो न द्विज कश्चित् । अनुगम्यामसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिरिति" ॥ ब्राह्मणेनासपिंडेन । द्विजो विप्रादिः । अस्य च घृतप्राशनस्य भोजनकार्ये विधाने प्रमाणाभावाच्च भोजननिवृत्तिरिति मिताक्षरायां तन्मानवसमानविषयं । वस्तुतो घृतप्राशनस्य प्रायश्चित्तार्थत्वाद्भोजनमेव युक्तम् । अत एव च वसिष्ठेन ( २३।२४-६ )
५ " मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमस्निग्धे त्वहोरात्र शवानुगमने चैवम् " इत्यनुगमने एकाहस्योक्तत्वात् । क्षत्रियवैश्यानुगमने त्वधिक कल्प्यं । ब्राह्मणस्य शूद्रानुगमने पराशरः ( ३।९१-९२ )

" प्रेतीभूत तु य शूद्रं ब्राह्मणो ज्ञानदुर्बल । अनुगच्छेन्नीयमान स त्रिरात्रेण शुद्धयति ॥
" त्रिरात्रे तु ततश्चीर्णे नदीं गत्वा समुद्रगा । प्राणायामशत कृत्वा घृतं प्राश्य विशुद्धयतीति" ॥

१० अत्र घृतप्राशनस्य शुद्धयर्थत्वाभिधानान्न भोजननिवृत्ति । एतच्च कामत । अकामतस्त्वर्धं । एव क्षत्रियस्य वैश्यशूद्रानुगमने वैश्यस्य च शूद्रानुगमने कल्प्यम् " इष्टापूर्तेशुभमहाकर्मस्वनुपहतानामपि स्थलिंगाचार्यादीना कृच्छ्रातिकृच्छ्रचान्द्रायणाख्यं सर्वमायश्चित्तं तत्स्थाने द्वादशप्राजापत्यत्वात्तदर्द्धं वा वदंतीति " **स्मृत्यर्थसारे** । कन्याया विवाहात्पूर्व रजोदर्शने प्रायश्चित्तमाह **प्रयोगपारिजाते आचार्यः**

१५ ' कन्यामृतुमतीं शुद्धा कृत्वा निष्कृतिमात्मवान् । तथा च कारयित्वा तामुद्वहेत्तानृशसधी ॥
" पिता त्वृतून्स्वपुत्र्यास्तु गणयेदादित सुधीः । दानावधि गृहे यत्नात्पालयेदादित सुधी ॥
" दद्यात्तदनुसंख्या गा शक्त कन्यापिता यदि । दातव्यैकाऽपि नि स्वेन दाने तस्या यथाविधि ॥
" दद्याद्वा ब्राह्मणेष्वेनोभतिनि स्व सदक्षिणा । तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥
" उपोष्य त्रिदिन कन्या रात्रौ पीत्वा गवा पय. । अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणं ॥

२० " तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्घृतमिति " ॥ श्राद्धोपवासदिने दंतधावने विष्णुरहस्ये " श्राद्धोपवासदिवसे खादित्वा दंतधावनं । गायत्र्या शतसपूतमबु प्राश्य विशुद्धयतीति " ॥ एवमन्यान्यपि प्रकीर्णप्रायश्चित्तानि द्रष्टव्यानि । इति प्रकीर्णप्रायश्चित्तानि ॥

अथ पतितत्यागविधिः । स च महापातकिन एवेति केचित् । शुक्र तु 'पतितस्य बहि कुर्यु'रित्यादौ पतितभार्योपादानात्सर्वोच्चे मानामत्वादुपपापादिना पतितस्यापि भवतीति
२५ प्रतीमः । तथा यदि बंधुभिः प्रेर्यमाणोऽपि प्रायश्चित्तं न करोति तदा कार्य । यथा शंखः " तस्य तद्दुरोर्नोन्यथाना राज्ञश्च समक्षं दोषान् विख्याप्य पुन पुनराचारं लभस्वेति स यद्येवमप्यनवस्थितमति स्यात्पात्रं विपर्यस्येत् " । अत्र कालमाह मनुः ( ११।१८२ )

" पतितस्योदक कार्यं सपिंडैर्बान्धवैः सह । निंदितेऽहनि सायान्हे ज्ञात्यृत्विग्गुरुसन्निधौ " ॥ निंदितेऽहनि रिक्तादितिथौ । देशमाह योगीश्वरः ( प्रा. २९५ )

---

१ ग्र-च रजोमतीं । २ ग-वर्धेति । ३ ठघ-मम. ।

" पतितस्य बहि कुर्य्यु सर्वकार्येषु चैव ॥ । दासीकुम बहिर्ग्रामान्निनयेरन् स्वबान्धवा " ॥ निनयनविधिमाह गौतमः ( २०।२–७ ) " तस्य विद्यागुरुयोनिसम्बद्धा सर्वाण्युदकादीनि प्रेतकर्माणि कुर्यु । पात्र चास्य विपर्यस्येयुर्दास कर्मकरो वाऽवकरात्पात्रमानीय दासीघटात्पूरयित्वा विपर्य्यस्येदमुमनुदक करोमीति नामग्राहत ते सर्वेऽन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा विद्यागुरवो योनिसम्बद्धाश्च वीक्षेरन्नप उपस्पृश्य ग्राम प्रविशेयु " । योनिसम्बद्धा पित्रा ५ दय । उदकदानादीत्यनेनाजलिप्रागभाविदाहादिनिवृत्ति । प्रेतकर्माणीति सपिंडीकरणातानामेव प्राप्त्यर्थं । दासो गर्भदास । कर्मकरो वेतनसपादित । दासीघटाद्दाऽस्याहृतजलेन । नामग्राहममुमित्यस्य स्थाने पतितनाम गृहीत्वा । स्मृत्यर्थसारे त्वमाक त्वमृत इत्युक्त्वा निनये दित्युक्त । दास्येव वा निनयेत् । यथा मनु ( ११।१८३ )

" दासीघटमपा पूर्णं पर्य्यस्येत्प्रेतवत्तदा । अहोरात्रमुपासीरन्नाशौच बान्धवै सह " ॥ १० प्रेतवदित्यपसव्यदक्षिणमुखत्वाद्यतिदेशार्थं । तत न स व्यवहार्य । यथा मनुः ( ११।१८४ ) " निवर्त्तेरस्ततस्तस्मात्सभाषणसहासने । दायाद्यस्य प्रदान च यात्रामेव च लौकिकी " ॥ स्त्रीत्यागे विशेषमाह योगीश्वरः ( प्रा २९७ )

" पतितानामेष एव विधि स्त्रीणा प्रकीर्त्तित । वासो गृहातिके देयमन्न वास सरक्षण " । अन्न जीवनमात्रक्षम । वस्त्र मलिन । यत्तु वासिष्ठः ( २१।१० ) १५

" चतस्रस्तु परित्याज्या शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुगितोपगता च येति " ॥ तत्पुर्वैरन्वासामन्नवस्त्राद्याच्छादनादित्यागार्थं । अन्यासा तु पतितानामन्नवस्त्रादि देयमिति विज्ञानेश्वरः । जुगित प्रतिलोमज । सभाषणे प्रायश्चित्त मिताक्षरायां ( पृ ३२२ प २४ ) " अत ऊर्ध्वं तेन सभाष्य तिष्ठेदेकरात्र जपन् सावित्रीमज्ञानपूर्वं ज्ञानपूर्वं च त्रिरात्रमिति " । त्यागोत्तरमनुतापादिना प्रायश्चित्त कृत्वा समायाते विशेषमाह मनुः ( ११।१८६ ) २०

"प्रायश्चित्ते तु चरिते पूर्णकुम्भमपा नव । तेनैव सार्द्ध प्राश्येयु स्नात्वा पुण्ये जलाशये " ॥ गौतमोऽपि ( २०।१०–१९ ) " यस्तु प्रायश्चित्तेन शुध्येत्तस्मिन् शुद्धे शातकुम्भमय पात्र पुण्यतमाद्ध्रदा पूरयित्वा स्रवतीभ्यो वा तत एनमप उपस्पर्शयेयुरथास्मै तत्पात्र दद्युस्तत्प्रतिगृह्य जपेच्छान्ता द्यौ शान्ता पृथिवी शान्त शिवमन्तरिक्ष यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भि पावमानीभिस्तरत्समन्दीभि कूष्माण्डैश्चाज्य जुहुयात् । हिरण्य २५ ब्राह्मणाय दद्याद् गा चाचार्याय । यस्य तु प्राणातिक प्रायश्चित्त स मृत शुद्ध्येत् । एतदेव शान्त्युदक सर्वषूपपातकेषु । तत एन कृतप्रायश्चित्त नैव कु सयेयु । तथा सर्वकार्येषु क्रयविक्रयादिषु तेन सह सव्यवहरेयुरिति " । उपस्पर्शयेयु राचमन कारयेयु । उपपातकेष्वभ्यासेन महापातकतुल्येन पातित्यापादकेषु । अत्र

---

१ ह्व–चे । २ यरघ–सदक्षिणं । ३ अवसव्ययरथाई–पूर्ववदेव ।

विशेषमाह हारीतः " स्वशिरसा यवसमादाय गोभ्यो दद्याद्यदि ताः प्रतिगृह्णीयुरथैनं प्रवर्त्तयेयुरितरथा नेत्यभिप्रेतं " । प्रतिग्रहो भक्षणं । इतरथा भक्षणाभावेन । स संव्यवहार्य इत्यर्थः । मिताक्षरायां स्मृत्यर्थसारे न भक्षणाभावे प्रायश्चित्तावृत्तिरुक्ता । वसिष्ठः " तथाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मनाख्यात " इति । अभिषिक्तस्य पूर्वोक्तरीत्या
५ स्नातस्य । प्रत्युद्धारः संग्रहः । स च पुत्रजन्मना व्याख्यातः । संग्रहोत्तरं जातकर्मादिना संस्कुर्यादित्यर्थः । क्वचित्प्रायश्चित्तोत्तरमपि संव्यवहारापवादमाह योगीश्वरः ( प्रा. २९९ )
" शरणागतबालस्त्रीहिंसकान्संविशेन्न तु । चीर्णव्रतानपि सतः कृतघ्नसहितानिमान् " ॥ संविशेन्न्यवहरेत् । इति पतितत्यागविधिः ॥

अथ रहस्यप्रायश्चित्तं । रहस्यं कर्त्रतिरिक्तेनाज्ञातं । अगम्यागमने च द्वयोः कर्तृत्वं व्यासक्त-
१० मतस्तत्र तदतिरिक्तेनाज्ञाते रहस्यत्वं । एतेन पापमात्रे तृतीयेनाज्ञाते रहस्यत्वमिति वदंतः प्राच्याः परास्ताः । अत्र प्रायश्चित्तमपि रहस्यमेव कुर्यात् । तथा च हारीतर्यमौ[1] " रहस्ये रहस्यं प्रकाशे प्रकाशमिति " । अत्र पर्षदुपस्थानमपि नास्ति । तथा याज्ञवल्क्यः ( प्रा. ३०१ )
" विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतं । अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत् " । तत्र यद्यनभिज्ञः कर्त्ता तदाऽमुकस्मिन् रहस्यपापे किं प्रायश्चित्तमित्यभिव्याजांतरेण पृष्ट्वा कुर्यात् ।
१५ तत्र साधारणप्रायश्चित्तानि मनुः ( ११।२२६ )
" एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः । अनाविष्कृतपापास्तु मंत्रैर्होमैश्च शोधयेत् " ॥

संवर्त्तः

" दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजातयः । पातकेभ्यः प्रमुच्यंते वेदाभ्यासान्न संशयः " ॥

वसिष्ठः ( २६।१२ )

२० " जपिनां होमिनां चैव ध्यायिनां[2] तीर्थसेविनां । निवसंति न पापानि ये च स्नाताः शिरोव्रतैः" ।

मनुः ( ११।२४५ )

" वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमा । नाशयंत्याशु पापानि महापातकजान्यपि ॥
" यथैधांस्तेजसा वह्निः प्राप्तान्निर्दहति क्षणात् । तथा ज्ञानकृतं पापं कृत्स्नं दहति वेदवित् ॥
" सव्याहृतिकाः प्रणवाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनंत्यहरहः कृता" ॥

२५ अन्वहमित्यत्रापि क्रमाकांक्षायां मासादित्यन्वेति । माधवीये यमः
" सहस्रपरमां देवीं शतमध्यां दशावरां । गायत्रीं स जपेन्नित्यं महापातकनाशनं ॥
" विरजे द्विगुणे जप्त्वा तदन्हैव विशुध्यति । वामदेव्यं द्विरावर्त्य तद० ॥
" पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् । वृषभं शतशो जप्त्वा तद० । वेदमेकगुणं कृत्वा तद० । रुद्रैकादशकं जप्त्वा तद० । चतुर्विंशतिमते

---

१ हारीतः । २ घ-ध्यायिनां ।

" पावमानीस्तथा कौत्सं पौरुषं सूक्तमेव च । जप्त्वा पापैः प्रमुच्येत सपुनः मधुच्छन्दसं ॥
" त्रिडालब्राह्मणं रुद्रं शुक्रियो मोक्षकरस्तथा । वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते ॥
" यज्ञायज्ञीयमादित्यं ज्येष्ठसाम च राजनं । पारुष्णं च सामानि जप्त्वा मुच्येत किल्बिषात् ॥
" अथर्वशिरसं चैव पुरुषसूक्तं तथैव च । नीलरुद्रास्तथैवैद्रं जप्त्वा पापैः प्रमुच्यते ॥
" आथर्वणाश्च ये केचिन्मन्त्राः कामविवर्जिता । ते सर्वे पापहर्तारो याज्ञवल्क्यवचो यथा ॥ ५
" ऋग्वेदमभ्यसेद्यस्तु यजुः सामाप्यथापि वा । सामानि सरहस्यानि अथर्वागिरसस्तथा ॥
" ब्राह्मणानि च कल्पाश्च षडङ्गानि तथैव च । आख्यानानि तथान्यानि जप्त्वा पापैः प्रमुच्यते ॥
" इतिहासपुराणानि देवतास्तवनानि च । जप्त्वा पापैः प्रमुच्येत धर्मस्थानैस्तथापरैरिति " ॥

**बौधायनः** " विधिना शास्त्रदृष्टेन प्राणायामान् समाचरेत् ।
" यदुपस्थकृत पापं पद्भ्यां वा यत्कृतं भवेत् । बाहुभ्यां मनसा वाचा श्रोत्रत्वक्घ्राणचक्षुषेति" ॥ १०

प्राणायामाः मासपर्यंतं षोडश । पूर्वोक्तमनुवाक्यात् । चतुर्विंशतिमते
" मृगारेष्टिः पवित्रेष्टिस्त्रिहविः पात्रनान्यपि । इष्टय पापनाशि यो वैश्वानर्या समन्विता " ॥

**कौर्मे**

" जपस्तपस्तीर्थसेवा देवब्राह्मणपूजनं । ग्रहणादिषु कालेषु महापातकशोधनं ॥
" पुण्यक्षेत्राभिगमनं सर्वपापप्रणाशनं । देवताभ्यर्चनं पुंसामशेषाघविनाशनं ॥ १५
" अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवं । ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ॥
" कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्दशीं । संपूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥
" त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनं । दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ॥
" एकादश्यां निराहारः समभ्यर्च्य जनार्दनं । द्वादश्यां शुक्लपक्षस्य सर्वपापैः प्रमुच्यते ॥
" उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः । २०
" यमाय धर्मराजाय मृत्यवे चांतकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
" प्रत्येकं तिलसंयुक्तान् दद्यात्सप्तोदकांजलीन् । स्नात्वा नद्यां तु पूर्वाह्णे मुच्यते सर्वपातकैः " ॥

तत्रैव

" नान्यत्पश्यामि जंतूनां मुक्त्वा वाराणसीं पुरीं । सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे ॥
" जपेद्वाऽप्यस्य वामीयं पावमानीरथापि वा । कुंतापवालखिल्याश्च निषित्प्रैषान् वृषाकपिं ॥ २५
" होतॄन् रुद्रान्सकृज्जप्त्वा मुच्यते सर्वपातकैः " ।

---

१ न-पाक । २ न-ब्रह्माणानि । ३ छ-पाठ बौधायन ' विधिना शास्त्रदृष्टेन प्राणायामान्समाचरेत् । यदुपस्थकृत पाप पद्भ्यां वा यत्कृत भवेत् । बाहुभ्यां मनसा वाचा श्रोत्रत्वग्घ्राणचक्षुषेति । प्राणायामाः मासपर्यंत षोडश । पूर्वोक्तमनुवाक्यात् । ४ घ-निविल्पर्षा, ल-निवि देषां ।

मनुः ( ११।२५२ )
" एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनं । अवेत्यृचं जपेदब्दं यत्किंचेदमितीति च " ॥
मंत्रेत्यृक् " अव ते हेडोवरुण नमोभिरि"त्यादिका । जपस्त्वर्थांतराविरुद्धे काले ।
शातातपः
५ " मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।
" भस्मछन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः " ॥ इदमकामतः सकृत्करणे ।
अभ्यासे तु षट्त्रिंशन्मते
" महाव्याहृतिभिर्होमस्तिलैः कार्यो द्विजन्मना । उपपातकशुध्यर्थं सहस्रपरिसंख्यया " ॥
महाव्याहृतिलक्षहोमेन शुद्ध्यति । हारीतः " पातकातिपातकोपपातकमहापातकानामेकतम-
१० संनिपाते वाऽघमर्षणमेव त्रिर्जपेत् " । यमः
" दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः । मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः " ॥
अत्र महापापातिपापानुपापोपपापेषु क्रमाच्चतुस्त्रियेकशतं प्राणायामाः । संकरीकरणादौ
प्रकीर्णकेषु च ह्रासः कल्प्य इति मिताक्षरायां । अत्रिः
" ब्रह्महा गुरुतल्पी वा गम्यागामी तथैव च । सुवर्णस्तेयश्चौरश्च गोघ्नो विश्वासघातकः ॥
१५ " शरणागतघाती च कूटसाक्षी त्वकार्यकृत् । एवमादिषु वाऽन्येषु पापेषु निरताः सदा ॥
" प्राणायामत्रयं कृत्वा कृत्वा कल्यं समाहितः । अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्यते" ॥
इति सामान्यतो रहस्यप्रायश्चित्तानि । अथ विशेषतः । तत्र योगीश्वरः ( प्रा. ३०२ )
" त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणं। अंतर्जले विशुध्येत गां च दत्वा पयस्विनीं" ॥
जपश्चांतर्जले निमज्जेन त्रिरावर्त्तनीयः " देवद्विजगुरुं हन्ताऽघमर्षणं त्रिरावर्त्तयेदिति "
२० सुमंतूक्तेः । इदमकामतः सकृद्वधे । यत्तु मनुः ( ११।२४८ )
" सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनंत्यहरहः कृताः " ॥
इति तदस्मिन्नेव विषये गोदानाशक्ताविति विज्ञानेश्वरः । उपवासत्रयाशक्तावित्यपरे ।
गौतमेन मासव्रतमुक्त्वोक्तं " एतद्व्रत एव ब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पेषु प्राणायामैः
श्रांतोऽघमर्षणं जपेदिति " तदकामाभ्यासे । योगीश्वरः ( प्रा. ३४७ )
२५ "लोमभ्यः स्वाहेत्यथवा दिवसं मारुताशनः । जले जप्त्वाऽभिजुहुयाच्चत्वारिंशद्धृताहुतीः " ॥
इदमप्यकामतः सकृद्वधविषयं । यत्तु मनुः ( ११।२५८ )
"अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहितां । मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिरिति" ॥
तत्कामतोऽभ्यासविषयं । कामतः श्रोत्रियादिवधविषयं वा । यच्च बौधायनः
" ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य स्नातः शुचिः शुचिवासा उदकांते
३० स्थंडिलमुपलिप्य सकृत् क्लिन्नवासाः सकृत्पूतेन पाणिनादित्याभिमुखोऽघमर्षणं
स्वाध्यायमधीयीत प्रातः शतं मध्यान्हे शतमपरान्हे शतमपरिमितं वोदितेषु नक्षत्रेषु प्रसृति-

यावकं प्राश्नीयात्। ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात्प्रमुच्यते द्वादशरात्रान्महापातकेभ्यः। ब्रह्महत्यां सुवर्णस्तेयं सुरापानमिति वर्ज्जयित्वा एकविंशतिरात्रेण तान्यपि तरतीति" तत्कामतः सकृद्वधविषयं। यत्तु **वृद्धविष्णुः** "ब्रह्महत्यां कृत्वा ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेंधनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्रमाहुतीर्जुहुयात्तदेतस्मात्पूतो भवतीति" तदनुग्राहकविषयं। यदपि **मनुः** (११।२५९) ५
"त्र्यहं तूपवसेद्युक्तस्त्रिरन्होऽभ्युपयन्नपः। मुच्यते पातकैः सर्वैस्त्रिर्जप्त्वा वाऽघमर्षणमिति"॥ तदतिनिर्गुणविषयं। यच्च **हारीतः** "महापातकातिपातकपातकोपपातकानामेकतमसंनिपाते वाऽघमर्षणमेव त्रिर्जपेदिति" तन्निमित्तिपरं। सवनस्थस्त्रीक्षत्रियविडाहिताग्निस्त्र्यात्रेयीगर्भिण्यविज्ञातगर्भवधेऽप्येता एव प्रायश्चित्तानि पादोनानि योज्यानि। इति **ब्रह्महत्याप्रायश्चित्तं**।

[1]अथ **सुरापाने**। **यमः** "सुरापः कंठमात्रमुदकमवतीर्य सुतसोमान् प्रसृतिमादायोंकारेणाभिमंत्र्य पिबेत्"। इदमौषधार्थपाने। **याज्ञवल्क्यः** (प्रा. ३०४) "त्रिरात्रोपोषितो हुत्वा कूष्मांडीभिर्घृतं शुचिः"। पूर्वलिखितैतत्पूर्वार्द्धस्थं चत्वारिंशदित्यनुवर्त्तते। कूष्मांड्यो "यद्देवा देवहेडनम्" इत्यादिकाः। इदमकामतः सकृत्पाने। एतदशक्तौ **मनुः** (११।२४९) १०
"मासं जपित्वा अप नो वासिष्ठं चत्वृचं प्रति। माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुद्ध्यति"॥ अप नो 'अप नः शोशुचदघमिति' 'सप्तर्चं। वासिष्ठं' 'प्रतिस्तोमेऽभिरुषसंवासिष्ठा' इति तृचं। माहित्रं 'महित्रीणामवोस्त्विति' तृचं। शुद्धवत्य 'एतोन्विंद्रंस्तवामेत्याद्या.'। एतेषां च जपो मासं प्रत्यहं षोडशवारमिति **विज्ञानेश्वरः**। कामतो सुरापाने **मनुः** (११।२५६) १५
"मंत्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः। सुगुर्व्वप्यपहंत्येनो जप्त्वा वा नम इत्यृचं"॥ देवकृतस्यैनस इत्यष्टौ शाकलहोमीया मंत्राः। नम इदुग्रं नम आविवास इत्यस्या वा ऋचो जपः। प्रत्यहं संवत्सरपर्यंतं। तदपि **स एव** (११।२५७) २०
"महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः। अभ्यस्याब्दं पावमानीर्भिक्षाहारो विशुध्यतीति"॥ तत्कामतोऽभ्यासविषयं। अनेकमहापापविषयं वा। इति **सुरापानप्रायश्चित्तं**॥

अथ **सुवर्णस्तेये**। तत्र **याज्ञवल्क्यः** "ब्राह्मणः स्वर्णहारी तु रुद्रजापी जले स्थितः"॥ पूर्वलिखितैतत्पूर्वार्द्धस्थं त्रिरात्रोपोषित इति विशुध्येदिति वाऽत्राप्यनुषज्यते। **अत्रिः** २५
"एकादशगुणान्वाऽपि रुद्रानावर्त्य धर्मवित्। महापापैरपि स्पृष्टो मुच्यते नात्र संशयः"॥ अनुग्राहकादिषु गुणवतो निर्गुणस्वामिकापहरणे सुवर्णोनपरिमाणहरणे [2]च **मनूक्तं** (११।२५०)
"सकृज्जप्त्वाऽस्य वामीयं शिवसंकल्पमेव च। सुवर्णमपहृत्यापि सकृद्भवति निर्मलः"॥

---

१ ईय-विप्राहिता। २ ङ्ग-अन्दवपे।

अस्य वामीयं 'अस्य वामस्य पलितस्य होतुरिति' द्वापंचाशदृक्सूक्तं। 'यज्जाग्रतो दूरमुदैति दैवमिति' षट् शिवसंकल्पमंत्राः। यत्तु माधवीये शातातपः "ब्राह्मणः सुवर्णस्तेयं कृत्वा हिरण्यं शालायां प्रक्षिप्याप्सु निष्णातो हिरण्यवर्णाभिश्चतसृभिरात्मानमभ्युक्ष्य त्रीन् प्राणायामान्कृत्वा तदेतस्मात्पापात्पूतो भवतीति" तद्गुणवतोऽतिनिर्गुणस्वामिकसुवर्णोनपरिमाण-
५ हेमहरणप्रयोजकत्वे द्रष्टव्यं। इति स्तेयप्रायश्चित्तं। अथ गुरुतल्पगमने मनुः (११।२५१)
"हविष्यांतीयमभ्यस्य न तमंह इतीति च। जप्त्वा च पौरुषं सूक्तं मुच्येत गुरुतल्पगः"॥ इति। हविष्यांतीयं 'हविष्यांतमजरं स्वर्विदमिति'। न तमं होनदुरितमिति 'नतमंहः' इति। 'इति वा इति मे मन' इति। पौरुषं सहस्रशीर्षेति। एतदन्यतमस्य मासं षोडशकृत्वो जप इति मिताक्षरायां। इदमकामतः सकृद्गमने। कामतस्तु
१० याज्ञवल्क्यः (प्रा. ३०५)
"सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः। गौर्देया कर्मणोऽस्यांते पृथगेभिः पयस्विनी"॥ जापी इति ताच्छील्यप्रत्ययादावृत्तिः। अत्र पुरुषसूक्तकरणकं होममुपवासत्रयं चाह वृद्धविष्णुः "त्रिरात्रोपोषितः पुरुषसूक्तजपहोमाभ्यां गुरुतल्पगः शुध्येदिति"। आवृत्तौ होमे च संख्यापेक्षायां पूर्वश्लोकगता चात्वारिंशद्घृताहुतीरित्यत्रापि संबध्यते इति विज्ञानेश्वरः।
१५ एभिरिति बहुवचने सुरापस्तेनगुरुतल्पगा गृह्यंते। तेन तैः स्वस्वप्रायश्चित्तांते एका धेनुर्देया। गुरुतल्पसमे तदतिदेशविषये चाऽर्द्धं पादोनं च क्रमेण योज्यं। महापातकिसंसर्गिणस्तु न सह संसर्गस्तदीयमेव प्रायश्चित्तं। प्रकाशप्रायश्चित्तभाजो रहस्यसंसर्गे तु रहस्यमेव व्रतं। संसर्गाख्यनिमित्तस्य रहस्यत्वात्। केचित्तु रहस्यप्रायश्चित्तभाजः प्रकाशसंसर्गे प्रकाशप्रायश्चित्ततामाहुस्तन्न। संसर्गस्य हि प्रकाशत्वममुकपापवत्संसर्गोऽयमिति परस्परज्ञाने भवति।
२० एवं परेण ज्ञाते भवति। एवं च परेण ज्ञाते प्रकाशपापवत्संसर्गत्वमेव तस्य भवति न तु रहस्यपापवत्संसर्गत्वं। यत्तु यौनाध्यापनादिसंसर्गस्यानेककर्तृत्वान्न रहस्यत्वमिति चेन्न। तत्रानेककर्तृत्वस्य व्यासक्तत्वात्तद्व्यतिरिक्तेनाज्ञाते भवत्येव रहस्यत्वं। तथातिपातक्यादिसंसर्गिणस्तदीयमेव व्रतं। इति रहस्यमहापापप्रायश्चित्तं॥
अथोपपापादिषु। याज्ञवल्क्यः (प्रा. ३०६)
२५ "प्राणायामशतं कार्यं सर्वपापापनुत्तये। उपपातकजातानामनादिष्टस्य चैव हि"॥ बौधायनोऽपि "अपि वाक्चक्षुःश्रोत्रत्वग्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति। शूद्रस्त्रीगमनान्नभोजने पृथक् पृथक् सप्ताहं सप्तप्राणायामान् धारयेत्। अभक्ष्याभोज्यामेध्यप्राशने तथा चापण्यविक्रयेषु मधुमांसघृततैलक्षाराल्वणरसान्नवर्जेषु। यच्चान्यदप्येवं युक्तं स्याद्द्वादशद्वादशप्राणायामान् धारयेत्। अथ पातकोपपातकवर्जं यच्चान्य-

१ इ-पाठः।

दप्येवं युक्तं स्यादर्द्धमासं द्वादशद्वादशप्राणायामान् धारयेत् । अथ पातकपतनीयवर्जं यच्चान्यदप्येवं युक्तं मासं द्वादशार्द्धं द्वादशद्वादशप्राणायामान् धारयेदथ पातकवर्जं यच्चान्यदप्येवं युक्तं द्वादशार्द्धमासं द्वादशद्वादशप्राणायामान् धारयेदथ पातकेषु द्वादशप्राणायामान् धारयेदिति " । अत्र प्राणायामत्रयं प्रकीर्णकेषु सप्ताहोद्वादशाहश्च गणितेषूपपातकविशेषेषु । अर्द्धमासो जातिभ्रंशकरादिषु । मासो वधाद्युपपापेषु । षण्मासा अतिपापानुपापेषु । संवत्सरो महापापेषु । तत्र सप्ताहे प्राणायामाः ॥ ४९ ॥ द्वादशाहे ॥ १४४ ॥ अर्धमासे ॥ १८० ॥ मासे ॥ ३६० ॥ षाण्मासिके ॥ २१६० ॥ संवत्सरे ॥ ४३२० ॥ एतानि च प्राणायामत्रयसप्ताहादिव्रतानि पूर्वोक्तेषु प्रकीर्णकोपपापादिविषयेषु भवंतीति **मिताक्षरायां** । ५

**कामतोऽभक्ष्यभक्षणे सुमंतुः** " रेतोविण्मूत्रप्राशनं कृत्वा लशुनपलांडुगृंजनकुंभीकादीनामन्येषां वाऽभक्ष्याणां भक्षणं कृत्वा ततः कंठमात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामत्रयं कृत्वा महाव्याहृतिभिरुरोगमुदकं पीत्वा तदेतस्मात्पूतो भवतीति " । १०

अकामतो **याज्ञवल्क्यः** ( प्रा. ३०७ )

" ॐकाराभिष्टुतं सोमसलिलं पावनं पिबेत् । कृत्वा तु रेतोविण्मूत्रप्राशनं हि द्विजोत्तमः " ॥

दुष्टप्रतिग्रहे **मनुः** ( ११।२९२ )

" प्रतिगृह्याप्रतिग्राह्यं भुक्त्वाऽन्नं तु विगर्हितं । जपंस्तरत्समंदीयं पूयते मानवस्त्र्यहादिति " ॥ १५

एतदभ्यासविषयं स एव ( ११।१९९ ) " अप्रशस्तं तु कृत्वाऽप्सु मासमासीत भैक्षभुक् " । इदं कामतोऽत्यंताभ्यासविषयं । अज्ञानकृतप्रकीर्णकवाचिकमानसोपपातकेष्वाह **योगीश्वरः** ( प्रा. ३०८ )

" निशायां वा दिवा वाऽपि यदज्ञानकृतं भवेत् । त्रैकाल्यसंध्याकरणात्तत्सर्वं प्रविणश्यति" ॥

**मनुरपि** २०

" यदन्हा कुरुते पापं कर्मणा मनसा गिरा । आसीनः पश्चिमां संध्यां प्राणायामैर्निहंति तत्" ॥

**शातातपः**

" अनृतं मद्यगंधं च दिवामैथुनमेव च । पुनाति वृषलान्नं च बहिःसंध्या उपासिता " ॥ **शंखः**

" शतं जप्ता तु सावित्री सर्वपापप्रणाशिनी । सहस्रजप्ता च महापातकेभ्यः प्रमोचिनी ॥

" दशसाहस्रजापेन सर्वकल्मषनाशिनी । २५

" सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः । सुरापश्च विशुद्धयंति लक्षजप्यान्न संशय" ॥ इति । सर्वपापानि प्रकीर्णकानि । महापातकान्युपपातकानि । सर्वकल्मषाण्यतिपातकानि वेति **विज्ञानेश्वरः** । सर्वपापेषु रहस्यप्रायश्चित्तप्रकारमाह **प्रायश्चित्तविवेके विश्वामित्रः**

"प्रकाश उक्तं यत्किंचिद्विंशद्भागो रहस्यके । त्रिंशद्भागः षष्ठिभागः कल्पो जात्याद्यपेक्षया" ॥

१ ब-अकामतो ।

आदिशब्देन शक्तिगुणकर्माभ्यासानभ्यासादि गृह्यते इति शूलपाणिः । अत्र द्वादशाब्दस्य विंशाशप्राजापत्या ॥ १८ ॥ त्रिंशाश १२ पष्ठ्यश ६ चतुर्विंशत्यद्बे एतद्विगुणा अशा । पडद्बे तदर्द्धं । यत्तु शूलपाणिः “ यत्र प्रकाशे मरणान्तिकं प्रायश्चित्तं तत्र रहस्येऽपि मरणान्तिकमेव मरणे ह्रासासंभवात् ” इत्याह तन्न । यद्यपि मरणे ह्रासो न संभवति तथापि तद्वैकल्पिके चतुर्विंशत्यब्दादौ स संभवत्येव । तेन चतुर्विंशत्यब्द-षष्टित्रिंशद्विंशाशा द्वादशचतुर्विंशतिषट्त्रिंशन्मिता प्राजापत्याद्यपेक्षया कर्त्तव्या । मरणान्तिकस्य तु तद्विधिना प्रकाशपापविषयत्वेनोक्तत्वाद्रहस्ये प्रापकप्रमाणाभावात्प्राप्तिरेव दूरापास्तेति सर्वं शिवं ॥

* परिभाषणमादित कृतं गदिता शुद्धिरथोसमानत ।<br>
१० वधपानपरस्वसमह यभिचारे सुधपापिसमतौ ॥ १ ॥<br>
उपपापेष्वथोजातिभ्रंशके सकरीकरे । अपात्रीकरणे प्रोक्त मलिनीकरणे तथा ॥ २ ॥<br>
प्रकीर्णके तत कृत घटापवर्नन तत । रहस्यपापनिष्कृतिर्विनिर्णया क्रमादिमे ॥ ३ ॥<br>
चर्मण्वतीतरणिजाशुभसगमस्य सान्निध्यभाजि कृतशालिनि मध्यदेशे ।<br>
ख्याता भरेहनगरी किल तत्र राजा राजीवलोचनरतो भगवतदेव ॥ ४ ॥

इति श्रीसगरवशावतसमहाराजाधिराजभगवतदेवोद्योजितेन मीमांसकशंकरभट्टात्मजेन भट्टनीलकण्ठकृते भगवतभास्करे प्रायश्चित्तमयूखो दशम ॥१०॥ श्लोकसख्या १४००॥



* इत परो द्वा पाठ ॥

१ अनलङ्–इति श्रीमीमांसकशकरभट्टात्मजभट्टनीलकण्ठकृतेभास्करेप्रायश्चित्तमयूख समाप्त । शुभं भवतु ।

२ यरघयह्ययर–घ–शिरोमुकमणि । घ–सवत् १८०६ वर्षे ज्येष्ठ बदि ७ शनौ । न–शके १७१६ आनदनामसंवत्सरे श्रावणशुद्धपंचम्यां भृगुवासरे इदं प्रायश्चित्तमयूख समाप्ता सतु । श्रीभार्गवरामशिष-यादर्शं पुस्तकं दृष्ट्वा तादृशं लिखित मया यदि शुद्धमशुद्ध वा मम दोषो न दियते ॥

## एतत्पुस्तकोद्धृतऋषिवचनानां न्यायानां अकारादिवर्णतः सूचिः।

## ( २ ) न्यायाः



समाप्तेयं सूची
जगन्नाथसूनुना विश्वनाथेन विरचिता।

